# व्यावहारिकं संस्कृतम्

## तृतीयम् पुस्तकम्

स्वाद्ध्यायशाला

# व्यावहारिकं संस्कृतम्

## तृतीयम् पुस्तकम्

पथिकृत्

**शिवराज आचार्यः कौण्डिन्न्यायनः**

आचार्यः, एम्.ए., विद्यावारिधिः (पि-एच्.डि.), वाचस्पतिः (डि.लिट्.)

रचयिता

**प्रमोदवर्धनः कौण्डिन्न्यायनः धर्ममीमांसाचार्यः**

**स्वाद्ध्यायशाला**

**२०५८**

**प्रकाशकम्—**
स्वाद्ध्यायशालाकुटुम्बम्

**प्रथमं संस्करणम्** (११०० पुस्तकानाम्)
२०५८ (निरयण-सौर-मेषमासस्य विंशे दिवसे प्रकाशितम्)

**मूल्यम्** ५०।– (पञ्चाशद् रूप्यकाणि)

**पुस्तकप्राप्तिस्थानम्—**

स्वाद्ध्यायशाला
च २/४१९, सरस्वतीमार्गः,
लाजिम्पाट्, काष्ठमण्डपमहानगरम्—२,
नेपालदेशः।

☎ ४४३३३२७, ४३८६९८९, ९८४१०९१४६७

**सुसङ्गमकाक्षरयोजकः—**
सुमोदवर्धनः कौण्डिन्न्यायनः, ब्रह्ममीमांसाचार्यः

**मुद्रकः—**

न्यू-नेपाल-प्रेस-मुद्रणालयः, नागपोखरी, ☎ ४३४८५०, ४३४७५३।

# विषयानुक्रमणिका

## भूमिका



## मूलग्रन्थः



## परिशिष्टानि

# भूमिका

## १. संस्कृतशिक्षाया आवश्यकत्वम्

संस्कृतवाङ्मयस्य महत्त्वमुपयोगित्वं च व्यावहारिकसंस्कृतस्य प्रथमस्य द्वितीयस्य च पुस्तकस्य भूमिकायामेव स्पष्टीकृतमस्ति। तद् बुद्ध्वा स्वम् आदर्शम्, धर्मम्, दर्शनम्, इतिहासम्, संस्कारम्, आचारम्, विचारम्, व्यवहारम्, वेषम्; स्वां भाषाम्, भूषाम्, नीतिम्, संस्कृतिम्; स्वराष्ट्रम्, स्वगौरवम्, स्वाभिमानं च रक्षितुमिच्छद्भिस् तेषु विषयेषु रममाणैश्च सर्वैर् भारतवर्षीयैर् जनैः, विशेषतो नेपालैर् जनैः स्वेच्छया प्रेम्णा च संस्कृतशिक्षा ग्राह्या, स्वजनेभ्यो देया च; संस्कृतशिक्षाया विकासाय विस्ताराय सुदृढीकरणाय च यथाशक्ति प्रयतितव्यं च। तादृशैः संस्कृतशिक्षानुरागिभिर् जनैः सह सामञ्जस्येन युतां स्वीयां जीवनयात्रां सञ्चालयितुमिच्छुकैरन्यैश्च जनैम् तत्र साहाय्यं कार्यम्।

## २. अस्याः व्यावहारिक-संस्कृत-पाठ्यपुस्तक-मालायाः प्रकाशने उद्देश्यम्

एषा व्यावहारिक-संस्कृत-पाठ्यपुस्तक-माला मुख्यतया संस्कृतभाषायाः शिक्षणायैव प्रकाश्यमाना वर्तते। एतस्याः पठनेन नेपालीयाद्याधुनिक-भारतवर्षीय-भाषाणां परिष्कृते प्रयोगेऽपि क्षमता वर्धते। एषा व्यावहारिक-संस्कृतपाठ्यपुस्तकमाला प्रथमादि-दशमान्तकक्षाणां कृते प्रकाशयितुमिष्यते। एतस्याः सम्पूर्णायाः संस्कृतपाठ्यपुस्तकमालाया अध्ययने कृते जनाः शास्त्रीयं व्यावहारिकं च संस्कृतं बोद्धुं व्याहर्तुं लेखितुं च समर्था भवेयुः।

प्रथमकक्षातः प्रभृति पञ्चमकक्षां यावद् इदानीम् ऐच्छिकरूपेण संस्कृतभाषां पाठयितुं नेपालदेशे सम्प्रशासनसञ्चालितेषु विद्यालयेष्वपि अवसरः प्राप्तुं शक्यते। तत्र अद्य यावत् प्रकाशितानामेतेषां त्रयाणामेवाऽपि व्यावहारिक-संस्कृतपाठ्यपुस्तकानां पञ्चमकक्षा-पर्यन्तमेवाऽपि पठनेन विशेषतो मनोयोगेनाऽभ्यासेन च संस्कृतवाङ्मयमन्दिरे प्रवेशाय द्वारमुद्घाटितं भवति।

एतेषां त्रयाणां संस्कृतपाठ्यपुस्तकानां पठनेन संस्कृत-माध्यमिक-विद्यालये षष्ठकक्षायां प्रवेशोऽतीव सुकरता च भवति।

इदानीन्तन्यां संस्कृतशिक्षाया दुर्गतेः स्थितौ तु उत्तरमध्यम-शास्त्र्याचार्यकक्षासु पठतामपि बहूनां जनानां कृते एतेषां पाठ्य-पुस्तकानामवलोकनमभ्यसनं च संस्कृतभाषायाः सम्यग् ज्ञाने सरलरूपेण शुद्धरूपेण च लेखने च योग्यतायाः प्राप्तौ महदुपकारकं भवेत्।

अस्माकं मते संस्कृतशिक्षायाः (१) धर्मदर्शनशिक्षा- (२) वेदवेदाङ्गोपाङ्गस्मृतिपुराणादिशास्त्रशिक्षा- (३) ज्योतिषाऽऽयुर्वेदादि-प्राच्यविज्ञानप्रविधिशिक्षा- (४) संस्कृतग्रन्थमूलकसर्वजनोपयोगि-साधारणशिक्षारूपाश् चत्वारः पक्षाः सन्ति। तेषां सर्वेषां पक्षाणा-मनुकूलतया प्रमुखतया साधारणशिक्षाङ्गरूपा एषा पाठ्यपुस्तकमाला प्रकाश्यमाना वर्तते। एवञ्च संस्कृतभाषायाः प्रचारणम्, स्वधर्म-संस्कृतिज्ञानविज्ञानकलासाहित्यसंरक्षणम्, संस्कृतशिक्षाविकासविस्तारसुदृढीकरणं चैवास्याः पुस्तकमालायाः प्रकाशने उद्देश्यम्।

## ३. व्यावहारिक-संस्कृत-पाठ्यपुस्तकमाला-प्रकाशन-कोषव्यवस्था

एतस्याः पुस्तकमालायाः प्रकाशनाय प्रारम्भे संस्कृतशिक्षाप्रेमिणां सात्त्विकेन दानेनैव कोषव्यवस्था क्रियते। अनन्तरं पुस्तकानां विक्रयेण प्राप्तस्य द्रव्यस्यार्धांशस्य च कोषे समावेशः करिष्यते। प्रतिपुस्तकं पुस्तकमूल्यस्य चतुर्थोऽशः पाठ्यपुस्तकस्य रचयित्रे परिव्ययत्वेन दास्यते। पुस्तकमूल्यस्य अन्यश् चतुर्थोऽशश्च पाठ्यपुस्तकप्रचारार्थं विनियोक्ष्यते। एवं क्रमेण प्रथमकक्षाप्रभृति दशमकक्षापर्यन्तं पञ्चम-कक्षापर्यन्तमेव वा दश पञ्च वा पाठ्यपुस्तकानि प्रकाशयिष्यन्ते। एतदर्थम् अवरतो द्वे लक्षे (२,००,०००।-) रूप्यकाणामावश्यके। तत्रैतस्य कोषस्य व्यवस्थां कर्तुं प्रथम-द्वितीय-पुस्तकप्रकाशनावसरे दत्ताद् दानादतिरिक्तं तृतीयपुस्तकप्रकाशनावसरेऽधोनिर्दिष्टं दानं दत्तवद्भ्यो-ऽधोलिखितनामकेभ्यो महानुभावेभ्यः स्वाध्यायशालाकुटुम्बेन धन्यवादा उपह्रियन्ते–

| | | |
|---|---|---|
| १. | श्रीयुता प्रभालक्ष्मी राणामहोदया काष्ठमण्डप-लालदर्बार-निवासिनी | ५००१।- |
| २. | श्रीयुतः डा.ठाकुरनाथ-पन्त-महोदयः काष्ठमण्डप-बतिसपुतलियोबिबोला-निवासी | ५०००।- |
| ३. | स्व.अर्जुनबहादुरसिंहकोषस्य सञ्चालिका काष्ठमण्डप-बालुआटार-निवासिनी | ३०२५।- |
| ४. | श्रीयुतः अमृतशमशेर-थापा-महोदयः काष्ठमण्डप-गैरिधारा जोरपिपल-निवासी | ३०००।- |
| ५. | श्रीयुतः प्रीतिनाथ-प्याकुर्याल-महोदयः काष्ठमण्डप-बालुआटार-निवासी | २०००।- |
| ६. | श्रीयुतः अशोक अग्रवालः महोदयः काष्ठमण्डप-लाजिम्पाट-निवासी | २०००।- |
| ७. | श्रीयुतः अनिल-गुप्त-महोदयः काष्ठमण्डप-त्रिपुरेश्वर-निवासी | २०००।- |
| ८. | श्रीयुता इन्दिरा-मल्ल-महोदया काष्ठमण्डप-लाजिम्पाट-निवासिनी | १००५।- |
| ९. | श्रीयुतः निरोधराज-पाण्डे-महोदयः काष्ठमण्डप-ज्ञानेश्वर-निवासी | १००१।- |
| १०. | श्रीयुतः मधुसूदन-ढकाल-महोदयः काष्ठमण्डप-चण्डोल-निवासी | १०००।- |
| ११. | श्रीयुतः तुलसीप्रसाद-भट्टराइ-महोदयः काष्ठमण्डप-बानेश्वर-निवासी | १०००।- |
| १२. | श्रीयुतः रवीन्द्रराज-पाण्डे-महोदयः ललितपुर-सानेपा-निवासी | १०००।- |
| १३. | श्रीयुतः रामबाबु-पन्त-महोदयः काष्ठमण्डप-ज्ञानेश्वर-निवासी | १०००।- |
| १४. | श्रीयुतः कमलमणि-दीक्षित-महोदयः ललितपुर-पाटन-निवासी | १०००।- |
| १५. | श्रीयुतः मुकुन्दशरण उपाध्यायः महोदयः पोखरा-निवासी | १०००।- |
| १६. | श्रीयुतः कमलवल्लभ-पन्त-महोदयः काष्ठमण्डप-ज्ञानेश्वर-निवासी | १०००।- |

| | | |
|---|---|---|
| १७. | श्रीयुतः पीताम्बर आचार्यः महोदयः काष्ठमण्डप-फर्पिङ-निवासी | ६००।- |
| १८. | श्रीयुतः डा.दण्डपाणि-पौडेल-महोदयः तनहुँ-मैबल-बारिफाँट-निवासी | ५०१।- |
| १९. | श्रीयुता शारदादेवी घिमिरेमहोदया काष्ठमण्डप-टक्साल-निवासिनी | ५०१।- |
| २०. | श्रीयुतः शालिग्रामप्रसाद-पराजुलि-महोदयः काष्ठमण्डप-कोटेश्वर-निवासी | ५०१।- |
| २१. | श्रीयुतः भुवनदेव-पन्त-महोदयः काष्ठमण्डप-पुतलिसडक-निवासी | ५००।- |
| २२ | श्रीयुतः हरिप्रसाद-पोख्यालय-महोदयः काष्ठमण्डप-चण्डोल-निवासी | ५००।- |
| २३. | श्रीयुतः राधारमण उपाध्याय आचार्यः महोदय काष्ठमण्डप-बानेश्वर-निवासी | ५००।- |
| २४. | श्रीयुतः हरिप्रसाद-पौडेल-महोदयः ललितपुरेमाडोल-निवासी | ५००।- |
| २५. | श्रीयुतः मोहनप्रसाद-बाँसकोटा-महोदयः काष्ठमण्डप-कमलपोखरि-निवासी | ५००।- |
| २६. | श्रीयुतः द्वारिका-श्रेष्ठ-महोदयः काष्ठमण्डप-पानिपोखरि-निवासी | ५००।- |
| २७ | श्रीयुतः शिवगोपाल-रिसाल-महोदयः ललितपुर-जाउलाखेल-निवासी | ५००।- |
| २८. | श्रीयुतः कुलशेखरशर्मा महोदयः काष्ठमण्डप-बानेश्वर-निवासी | ५००।- |
| २९. | श्रीयुता मीना-सिग्देल-महोदया काष्ठमण्डप-चाबहिल-निवासिनी | ५००।- |
| ३०. | श्रीयुतः रेवतीरमण-खनाल-महोदयः काष्ठमण्डप-कालिमाटि-निवासी | ५००।- |
| ३१. | श्रीयुतः मधुसूदन-रिसाल-प्रदीप-महोदयः ललितपुर-जाउलाखेल-निवासी | ५००।- |
| ३२. | अन्ये उदारा महानुभावा | ७८०१।- |

## ४. संस्कृतभाषायाः शुद्धमुच्चारणम्, संस्कृतभाषास्वभावश्च

संस्कृतभाषायाः शुद्धमुच्चारणं कीदृशं भवतीति ज्ञानमिदानीं सुदुर्लभमस्ति। एतस्मिन् विषयेऽस्मदीये द्वितीये पुस्तके स्पष्टतया प्रतिपादनं कृतमस्ति। तत् तत एव वेदितव्यम्। एतस्मिन् विषये विशिष्टं ज्ञानं कर्तुमिच्छद्भिर् जनैः स्वाध्यायशालाकुटुम्बेन प्रकाशितायाः कौण्डिन्न्यायनशिक्षाया अध्ययनं च कृत्वा सम्बद्धविषयाणां मननं कर्तुमुचितमस्ति।

## ५. एतस्यां संस्कृतपाठ्यपुस्तकमालायां संस्कृतभाषायाः प्रयोगेऽनुसृता सरणिः

नेपालीयाद्याधुनिक-भाषाणां निकटवर्तिनां संस्कृतभाषायाः प्रातिपदिकानां धातूनाञ्च प्रयोगः नेपालीयभाषाद्याधुनिक-भाषाभाषिणां बालकानां कृते सुबोधः सुकरश्च भवतीति हेतोः प्रारम्भिककक्षापाठ्यपुस्तकेषु तादृशानामेव प्रातिपदिकानां धातूनाञ्च मुख्यतया प्रयोगः कर्तव्य इति सरणिमनुसृत्य एतत् पाठ्यपुस्तकं विरचितं वर्तते। एतस्मिन् विषये द्वितीयपुस्तके भूमिकायां **"संस्कृतस्य शुद्धम् उच्चारणम्, संस्कृतभाषा च"** इति प्रकरणे विशेषतः स्पष्टीकरणं कृतमस्ति।

एतत्, इदम्, अदस्, तत् इत्येतेषां प्रातिपदिकानां प्रयोगे **"इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम्। अदसस् तु विप्रकृष्टं तदिति परोक्षे विजानीयात्"** इत्यादिका वस्तुस्थितिर् निरन्तरं स्मृता वर्तते।

अन्यैः संस्कृतपाठ्यपुस्तकलेखकैः सरलीकरणं व्यपदिश्य भूतार्थे अद्यतनेऽपि लङ्लकारस्य प्रयोगः क्रियते। किन्तु तादृशः प्रयोगः संस्कृतभाषायाः पाणिनीयव्याकरणान्वाख्यातस्य स्वभावस्य प्रतिकूलोऽस्ति। तस्मादस्माभिः संस्कृतभाषायाः पाणिनीयव्याकरणान्वाख्यात-स्वभावमनुसृत्याऽत्र सामान्ये भूते लुङ्लकारस्य प्रयोगः कृतो वर्तते। भूतविशेषे यथायथं लङो लिटो वा प्रयोगोऽपि प्रदर्शितोऽस्ति। संस्कृते स्वाभाविकमपि व्यञ्जनद्वित्वं प्रसिद्ध्यनुरोधेनाऽत्र परिहृतं वर्तते। नीतिश्लोकेष्वेव निदर्शनाय तत् प्रदर्शितमस्ति।

अत्र प्रातिपदिकविभक्त्यव्ययादीनां प्रयोगे भाषागत-स्वाभाविकताया अनुसरणं सावधानतया कृतं वर्तते। अभ्यासवर्धनाय पूर्वस्मिन् पाठे पठितानां पदानां वाक्यानां चोत्तरस्मिन् पाठेऽपि यथौचिति प्रयोगः कृतोऽस्ति।

एतस्यां पाठ्यपुस्तकमालायां प्रातिपदिकरूपेषु प्रथमे पुस्तके अस्मद्, युष्मद्, बालक, बालिका, फल, किम् इत्येतेषां प्रातिपदिकानां तादृशानामन्येषाञ्च प्रातिपदिकानाम्; द्वितीये पुस्तके च कवि, नदी, पशु, सर्व, तत्, एतत्, इदम्, अदस् इत्येतेषां प्रातिपदिकानां तादृशानामन्येषां च प्रातिपदिकानां रूपाणां प्रयोगाः विशेषेण प्रदर्शिताः; उक्तानां प्रातिपदिकानां सर्वाणि रूपाणि च परिशिष्टे प्रदर्शितानि। एतस्मिन् तृतीये पुस्तके च अत्यावश्यकानाम् अन्यादीनां केषां चित् प्रातिपदिकानां सर्वाणि रूपाणि परिशिष्टे प्रदर्शितानि सन्ति।

एतस्यां पाठ्यपुस्तकमालायां धातुरूपेषु च प्रथमे पुस्तके भू, खाद्, पा, पठ्, गम्, दृश्, हिण्ड्, शी, कृ, अस् इत्येतेषां धातूनां लट्-लुङ्-लोट्-लकाराणां रूपाणां तदनुरूपाणामन्येषां धातूनां च रूपाणां प्रयोगाः विशेषेण प्रदर्शिताः; उक्तानां धातूनामुक्तेषु लकारेषु सर्वाणि रूपाणि च परिशिष्टे प्रदर्शितानि। द्वितीये पुस्तके च उक्तानां धातूनां लट्-लुङ्-लङ्-लिट्-लृट्-लुट्-लोट्-लकाराणां रूपाणां तदनुरूपाणामन्येषां धातूनां च रूपाणां प्रयोगाः विशेषेण प्रदर्शिताः, दृशधातुं विहायाऽन्येषामुक्तानां धातूनां भी, दा, क्री, चुर् इत्येतेषां धातूनां चोक्तेषु लकारेषु सर्वाणि रूपाणि च परिशिष्टे प्रदर्शितानि। एतस्मिन् तृतीये पुस्तके च दशगण्यां प्रमुखाणां धातूनां कर्तृवाच्यक-लट्-लुङ्-लङ्-लिट्-लृट्-लुट्-विध्यादिलिङाशीर्लिङ्-लोट्-लृङ्-लकाराणां रूपाणि परिशिष्टे प्रदर्शितानि सन्ति।

हिण्डते छुपति इत्यादिकाः प्रयोगा इदानीमुपलभ्यमाने संस्कृतवाङ्मये अप्रचलिताः, तथापि नेपालीयाद्याधुनिकभाषाणां निकटे स्थिताः पाणिनीयधातुपाठसम्मताश् चेति हेतोरत्र पाठ्यपुस्तकमालायां परिगृहीताः।

बालानां कृते सुबोधानां दैनन्दिने व्यवहारे आगन्तृणामपि पदार्थानां वाचकानि कानि चन पदानि तु संस्कृतभाषाया इदानीं दैनन्दिन-लोकव्यवहारादपसृतत्वात् शिक्षकाणामपि कृते दुर्बोधानि जातानि अवगम्यन्ते। एतस्मिंस् तृतीये पाठ्यपुस्तके प्रयुक्ताना तादृशानां प्रमुखाणां पदानां सपर्यायाणामुल्लेखोऽत्र क्रियते–

डावकः=बिडालः, थलितम्=कर्म, भूतवैद्यः=तन्त्रमन्त्रादिना रोगाणां चिकित्सकः, लम्बपुच्छः=दीर्घलाङ्गूलः, कोण्डकम्= कुण्डके पाचितं पशुखाद्यम्, हम्भा=गवां शब्दः, वागीश्वरः=सरस्वतीपतिः ब्रह्मा, पदातिः=पादचारी सैनिकः, हस्त्यारोहः=निषादी, चटाः=पक्षिणः, स्तूपिका=शिरस्त्रम्, वेत्रफलकः=वेत्रनिर्मितं फलम् (योधादिशरीरस्य शत्रुप्रहाराद् रक्षकमुपकरणम्), कलमम्=लेखनी, एकला=एकाकिनी, ग्रन्थिच्छेदकः=ग्रन्थ्यादिकं छित्त्वा द्रव्यस्य हर्ता, सामकम् ऋणम्=विना वृद्धिमपाकरणीयमृणम्, एडका=मेषा, प्राड्विवाकः=व्यवहारं द्रष्टुं शासकेन नियुक्तः पुरुषः, अधमर्णः=ऋणग्राहकः, उत्तमर्णः=ऋणदाता, ज्वरितः=ज्वरेण युक्तः, अवश्यायः=नीहारः, कुहेलिका; चण्डः=तीव्रः, घर्मः=आतपः, शुष्कयति=शुष्कं कुरुते, शष्कुली=घृतपक्वस् तिलादियुतो मृष्टोऽपूपविशेषः, संयावः=घृतभृष्टे तप्ते गोधूमादिचूर्णे शर्करायुक्तं दुग्धं शर्करायुतं पानीयं वाऽवधाय पाचितो भोज्यविशेषः, यवागूः=शिथिलपक्व ओदनविशेषः, भकायः=मर्कटान्नम्, ग्रामालयः=मातुलगृहम्, मायतनम्=स्त्रिया मातृगृहम्, लुग्नम्=वसनम्, काचकूपिका=काचनिर्मितो भाण्डविशेषः, शम्याका=मानकाष्ठिका, आकाशवाणीयन्त्रम्=दूराद् विद्युत्साहाय्येन प्रसारितस्य शब्दस्य श्रवणे उपकारको यन्त्रविशेषः, बन्धगोभी=पत्रगोभी, चिचिण्डकः=व्यञ्जनोपयोगी दीर्घाकारो लताफलविशेषः, लगयति=परिधत्ते, सोमं सुन्वीरन्=सोमयागं कुर्वीरन्, क्षैरेयम्=पायसम्, पामा=लूता, जालम्=वातायनम्, अवटः=गर्तः, क्ष्वेदितुम्=मोक्तुम्, डोरः=रज्जुः, अवकरः=सङ्करः, विटपः=लघुर् वृक्षादिपोतः, हासिका=लघुदात्रम्, अमुर्हि=पुरा।

यद्यपि सम्प्रशासननियन्त्रितपाठ्यपुस्तकविकासकेन्द्र-प्रकाशितेषु संस्कृत-माध्यमिक-विद्यालयस्य षष्ठ-सप्तमा-ऽष्टमकक्षाणाम् "अस्माकं संस्कृतभाषा" इत्युक्तेषु पाठ्यपुस्तकेषु प्राप्याः संस्कृतव्याकरणम्, संस्कृतसाहित्यम्, वेदपरिचयः, ज्योतिषपरिचयः, न्यायविद्या-महिमा, आयुर्वेदपरिचयः इति निबन्धा विविधाभिस् त्रुटिभिर् युक्ताः प्रायेण भ्रमजनकाश्च दृश्यन्ते, तथापि तेषु विषयेषु लेखितुं स्थाना-ऽभावादत्राऽवसरो न प्राप्तः। अस्माकं तातपादैः श्रीमद्गिराचार्यविश्वराज-कौण्डिन्न्यायनमहाभागैरेव निरन्तरं महति प्रयासे कृते सम्प्रशासन-स्वीकृतपाठ्यक्रमे संस्कृतमाध्यमिकविद्यालयार्थं मुख्यविषयतयेदानीं स्वीकृतस्य उत्तरमध्यमकक्षायां चाऽध्याप्यमानस्य च नीतिशास्त्रस्य परिचयाय तत्र जनानां रुचेर् वर्धनाय च एका लघ्वी सरलनीतिशास्त्रशिक्षामहत्त्वस्य सूचिका सारपूर्णा कथा शिक्षकाणां विद्यार्थिनामभि-भावकानां च साहाय्यायाऽत्र सरलनीतिशास्त्रशिक्षाप्रवृत्तिरिति शीर्षकेण युता समावेशिताऽस्ति।

## ६. पठन-पाठन-प्रक्रिया

अत्र वैदिकानाम् अग्नि-वायु-सूर्याणां भूलोकादिस्थानत्रयप्रमुखदेवतानां स्तोत्राणि अवश्यपठनीयत्वेन सङ्गृहीतानि न सन्ति। तथापि शिक्षकैरभिभावकैर् विद्यार्थिभिरन्यैश्च तानि वैदिकमुख्यपरम्परामाहात्म्यं बुद्ध्वा यथारुचि परिग्रहीतुं शक्यन्ते।

शिक्षणेऽस्य पुस्तकस्य प्रयोगस्य विषये प्रथम-द्वितीयपुस्तकयोः प्रदर्शिता प्रक्रियैव यथौचिति अवलम्बनीया।

सुदीर्घपरम्परागतासु रागात्मकगेयतायुतासु पद्यबद्धरचनासु अन्यन्तगभीरभाववत्सु सुभाषितेषु च विद्यार्थिनामभिरुचिं जागरितां कर्तुमत्राऽनेकेषु पाठेषु चाऽन्ते कानि चन तत्तत्पाठानुकूलानि पद्यानि दत्तानि सन्ति; धर्मा-ऽर्थ-काम-मोक्षसुभाषितानि, ऋतु-चर्यापद्यानि, गीतापद्यानि, सामान्यनीतिपद्यानि चाऽस्मिन् पुस्तके दत्तानि सन्ति। बाल्यात् प्रभृत्येव बालका एतादृशानां पद्याना लयबद्धतया पठनस्याऽभ्यासं कुर्युस्तर्हि ते स्वपरम्परातोऽपगता न स्युरिति एतानि पद्यान्यत्र सङ्गृहीतानि सन्ति। कक्षायामेतेषां पद्यानां श्रावणं शिक्षकेण भूयोभूयः कार्यम्। एतेषां पद्यानां कण्ठस्थीकरणे विद्यार्थिनः प्रोत्साहनीयाः। अत्राऽन्यदीयेष्वपि पद्येषु क्व चिदावश्यकं परिवर्तनमपि कृतमस्ति। एतेषु पद्येषु भाषिकदृष्ट्या कक्षानुरूपताया अभावोऽप्यस्माभिः सोढव्य एव। अत्राऽर्थावबोधनमपि गौणमेवेदानीम्।

आत्मनो बालकान् गम्भीररूपेण संस्कृते प्रवृत्तान् कर्तुं ये वाञ्छन्ति ते समीपस्थे विद्यालये संस्कृतपाठनस्य स्वाभीष्ट-रूपायां व्यवस्थायामसत्यामपि स्वगृह एवैतां व्यावहारिक-संस्कृत-पाठ्यपुस्तकमालां प्रारम्भतः क्रमेण पाठयित्वा स्वोद्देश्यं प्राप्तुं शक्नुवन्तु इति विचार्य तदनुकूलतां विधातुमत्र प्रथमे पुस्तके गणेशस्तोत्रादिकं सर्वं समाविष्टमस्ति, वर्णमाला-सम्बद्धा सामग्री च दत्ता वर्तते, परिशिष्टञ्च योजितमस्ति; द्वितीये पुस्तकेऽपि तदनुरूपाः सामग्र्यो दत्ताः सन्ति; तृतीयेऽस्मिन् पुस्तकेऽपि तदनुरूपा एव सामग्र्यः प्रचुरतया प्रस्तुताः सन्ति। विद्यालया अपि एतान् विषयान् स्वेच्छया परिग्रहीतुं शक्नुवन्ति।

एषोऽस्माकं संस्कृत-शिक्षणरीतेः स्वगृहाद् बहिः प्रयोगस्य संस्कृतवाङ्मयसेवामात्रप्रयोजनस् तृतीयः प्रयासो वर्तते। अतोऽत्रा-ऽनुभवस्य न्यूनतया बहवो दोषास् त्रुटयश्च प्रविष्टाः भवेयुः। तन्निराकरणाय संस्कृतशिक्षाविदां शिक्षकाणामभिभावकानां च साहाय्यं प्रार्थ्यते।

## ७. एतस्य पुस्तकस्य प्रकाशने विलम्बस्य कारणम्

एतद् व्यावहारिकं संस्कृतम् (तृतीयं पुस्तकम्) इति पाठ्यपुस्तक महता विलम्बेन प्रकाशमागतमस्ति। अत्र मुख्यं कारणं जनानां मौखे व्यवहारे संस्कृतं प्रति अनुरागे दृश्यमानेऽपि कार्ये तस्य दुर्लभत्वमेवास्ति।

अस्माभिरेतेषु पाठ्यपुस्तकेषु नैपालीयभाषायां प्रयुज्यमानानामपभ्रंशपदानां निकटे स्थितानि संस्कृतपदानि प्रयोगं आनेतुं भूम्ना प्रयासे क्रियमाणेऽपि वाक्यरचनायां तु संस्कृतभाषायाः पाणिन्यन्वाख्यातस्वभावस्यैवाऽनुसरणं कृतमस्ति। संस्कृतभाषायाः स्वाभाविकस्य प्रवाहस्याऽनुरूपा बहवो विशेषाः विषयगता विशेषाश्चाऽस्माकं पाठ्यपुस्तकेषु सन्ति। तेषामनुकरणं सम्प्रशासनाधीनपाठ्यक्रम-विकासकेन्द्रसम्बद्धैः संस्कृतविश्वविद्यालयसम्बद्धैरन्यैश्च संस्कृतपाठ्यपुस्तकानां लेखकैः कृतं क्रियमाणं च दृश्यते। एतत् तथ्यमस्माकं पाठ्यपुस्तकानां प्रकाशनस्य प्रारम्भस्य कालात् (२०५० तमाद् वैक्रमाब्दात्) प्राक् प्रकाशितानां पश्चात् प्रकाशितानां च तेषा पाठ्यपुस्तकानां परीक्षणे कृते तटस्थैर् विवेचकैः सम्यग् ज्ञातुं शक्यते।

साधारण-विद्यालयस्य षष्ठ्याः कक्षायाः सम्प्रशासननिर्धारिते सम्बद्धे पाठ्यक्रमे (२०५०) **अनिर्दिष्टा** अपि "अस्माकं संस्कृत-माला" इतिनामके साधारणविद्यालयानां षष्ठ्याः कक्षायाः पाठ्यक्रमविकासकेन्द्रप्रकाशिते पाठ्यपुस्तके **प्रारम्भे समावेशिता एकादश पाठा** अस्माकं प्रथमस्य व्यावहारिक-संस्कृत-पाठ्यपुस्तकस्याऽनुकरणेनैव तत्र समावेशिताः प्रतीयन्ते।

अस्माकं पाठ्यपुस्तकं तादृशेऽनुकरणीये गुणे वर्तमानेऽपि विश्वविद्यालय-पाठ्यपुस्तकानां विद्यालय-पाठ्यपुस्तकानां च निर्धारणे लेखने परीक्षणे मुद्रणे च सम्प्रशासननियुक्तानां जनानामेव एकलाधिकारस्य वर्तमानत्वात्, सम्प्रशासने च विद्यायाः शास्त्रस्य धर्मस्य सत्यस्य न्यायस्य च दौर्बल्यादर्थबलस्य जनसमूहबलस्य चैव प्राबल्यात् सम्प्रशासननियन्त्रितानि संस्कृतपाठ्यपुस्तकानि कर्मकाण्डादि-पुस्तकानि च शास्त्र-धर्म-सत्य-न्याय-दृष्ट्या विलोकने दृश्याभिर् विषयगताभिर् भाषागताभिः प्रतिपादनशैलीगताभिश् चाऽनेकाभिरशुद्धिभिस् त्रुटिभिर् भ्रष्टताभिश्च परिपूर्णानि दृश्यन्ते। एतादृशी स्थितिः पञ्चायतकाले इदानीन्तने काले च समानैव दृश्यते। तथा हि–

चूडानाथभट्टराया-ऽम्बिकाप्रसादाधिकारि-लीलानाथवाग्लेनामकैर् लेखकैर् लिखितत्वेन प्रकाशिते संस्कृत-माध्यमिक-विद्यालयस्य अष्टम्याः कक्षायाः संस्कृतभाषानामके पुस्तके (२०२८, २०२९) बह्व्योऽशुद्धय आसन्। तस्यैव पुस्तकस्य नवीने संस्करणे (२०३८, २०४८) "चैत्रशुक्लाष्टम्यादारभ्य" (पृ.४), "मन्दिरस्तु" (पृ.४), "इतस्ततो चरति" (पृ.१०), "विवदन्तौ" (पृ.१३,१४), "प्रयतिष्यामि" (पृ.१८) इत्यादयो बह्व्योऽशुद्धयः स्थिता एव दृश्यन्ते स्म।

चेतोनाथ आचार्य इत्युल्लिखितेन लेखकेन लिखितत्वेन प्रकाशिते नवम-दशमकक्षयोः संस्कृतभाषानामके पुस्तके (प्रथमभागे) च (२०३९, २०४४, २०५२) "स्वदेशं न स्निह्यति" (पृ.२), "ता दर्शने सुन्दराः" (पृ.५), "मूर्तयः कीदृशाः" (पृ.६), "संगठितजनसहयोगः" (पृ.१५), "प्रवहमानानाम्" (पृ.३१), "अग्रथयञ्च" (पृ.४०) इत्यादयो बह्व्योऽशुद्धयो दृश्यन्ते स्म। एतस्य पुस्तकस्य लेखक-परीक्षक-परिमार्जकाः सिंह-व्याघ्रयोर् भेदमपि न जानन्ति स्मेति एतस्य पुस्तकस्य "जातिधर्मो हि दुस्त्यजः" (पृ.७-९) इत्यस्मिन् प्रकरणे मूलपाठे प्रश्नावल्यां च सिंह-व्याघ्रशब्दयोः पर्यायतया साङ्कर्येण कृतस्य प्रयोगस्य दर्शनाद् ज्ञायते। एतस्य पुस्तकस्य लेखकेन "अतिथिसत्कारफलम्" इति पाठे च अन्येन विदुषा परिष्कृतानां श्लोकानां परिष्कारकस्य नाम्नो ग्रहणं विनैव समावेशः कृतो दृश्यते स्मेति तेन परपरिश्रमफल-चोरणं च कृतमवगम्यते। तेन लेखकेन कुमारसम्भवभागे च गङ्गाधराख्येण विदुषा कृता पुसवनी टीका च चौर्येणैव समावेशिता दृश्यते (पृ.५४-५५)। तत्र सप्तमे श्लोके हिन्द्यां पद्यमयोऽनुवादश्च दृश्यते (पृ.६३)। एतस्यैव पाठ्यपुस्तकस्य द्वितीये भागे (२०४०) समावेशिता लघुसिद्धान्तकौमुदी तु लेखकसम्पादकादिनामरहिता सर्वथा गीताप्रेससंस्करणाऽनुकृतिरूपाऽवगम्यते। तत्र क्वाऽपि टिप्पणी सूचना वाऽपि न दृश्यते। एतेनैतस्य पुस्तकस्य प्रकाशकस्याऽपि वचनीयतापात्रत्वं स्फुटीभवत्येव।

इदानीन्तन्यां व्यवस्थायां पाठ्यक्रमविकासकेन्द्रेण प्रकाशितेषु संस्कृतपाठ्यपुस्तकेषु च– साधारण-विद्यालयानां षष्ठ-सप्तमा-ऽष्टमकक्षाणां संस्कृतपाठ्यपुस्तकानाम् "अस्माकं संस्कृतमाला" इति नामैवाऽसङ्गतमस्ति, पद्यमाला, गद्यमाला इत्यादिकं तु बुध्यते, "संस्कृतमाला" इति तु न बुध्यते, तस्य पदस्य को विग्रहः, कश्चार्थः स्यात्? दुर्वैदग्ध्यविलसितमेव तदवगम्यते। तत्र डा माधवभट्टराइ-लिखिते षष्ठ्याः कक्षायाः पाठ्यपुस्तके पञ्चमे संस्करणे (२०५७) अपि "नेपालीयाः" (पृ.६४), "चमरीगाव" (पृ.९) इत्यादिका अशुद्धा प्रयोगाश्चाऽनेके पूर्ववत् स्थिता दृश्यन्ते। डा माधवभट्टराइलिखिते सप्तम्याः कक्षायाः पुस्तके तृतीये संस्करणे (२०५४) अपि "इत्यादीनि स्थानानि" (पृ.५४) इत्यसङ्गतः प्रयोगः, शम्भुप्रसाददाहालादिलिखिते च अष्टम्याः कक्षायाः पुस्तके (२०५५) "उभौ गच्छतः" (पृ.२७) इति स्त्रीविषयकोऽशुद्धः प्रयोगश्च स्थालीपुलाकन्यायेन द्रष्टव्यौ।

शम्भुप्रसाददाहाललिखितत्वेन पाठ्यक्रमविकासकेन्द्रेण प्रकाशिते संस्कृत-माध्यमिक-विद्यालयस्य षष्ठ्याः कक्षायाः "अस्माकं संस्कृतभाषा" इतिनामके पुस्तके (२०५२) "पञ्चदिनानां यमपञ्चकम्" (पृ.५१) इति अशास्त्रीयं प्रतिपादनम्, "अहं कन्दुकं खेलामि" (पृ.६४,६६) इत्यादिका अशुद्धा प्रयोगाश्चाऽनेके दृश्यन्ते। शम्भुप्रसाददाहाललिखितत्वेनैव प्रकाशिते सप्तम्याः कक्षायाः "अस्माकं संस्कृतभाषा" इतिनामके पुस्तके (२०५३) "शशकस्य मन्दगमनेन सिंहोऽतीव बुभुक्षित आसीत्" (पृ.२४) इत्येतादृशो दुष्टु प्रयोगः, "यजुर्वेदसंहितायाः द्वौ भागौ स्तः, एकः शुक्लयजुर्वेदः, अपर कृष्णयजुर्वेदश्च" (पृ.४४) इत्येतादृशो भ्रमजनकः प्रयोगश्चेत्यादयोऽनेके दोषा भाषागता अशुद्धयश्च बहवो दृश्यन्ते।

डा वेणीमाधव-ढकाल-लिखितत्वेन पाठ्यक्रमविकासकेन्द्रेण प्रकाशिते अष्टमकक्षायाः "अस्माकं संस्कृतभाषा" इतिनामके पुस्तके (२०५४) अपि "प्रणष्टाः" (पृ.३०) इत्यादयोऽशुद्धाः प्रयोगाः "वेदेनोपदिष्टानां नित्यानां सन्ध्यावन्दनादीनाम्, अनित्यानां ग्रहण-स्नानादीनां कर्मणां पालनं धर्म इत्युच्यते। वेदेनाऽनुपदिष्टानाम् निन्दितानाञ्च कर्मणां पालनमधर्मः" (पृ.३४) इत्यादयोऽसङ्गता दुष्टु प्रयोगाश्चाऽनेके दृश्यन्ते।

केशवशरणोपाध्यायलिखितत्वेन पाठ्यक्रमविकासकेन्द्रेण प्रकाशिते (२०५१) "अस्माकं संस्कृतव्याकरणम्" इतिनामके संस्कृत-माध्यमिक-विद्यालयस्य षष्ठ्याः कक्षायाः पाठ्यपुस्तके "अनुनासिकस्याऽच इत्संज्ञकसूत्रम्" (पृ.३) इत्यादयो दुष्टु प्रयोगाः, "प्रयत्नम्" (पृ.१४,२१) इत्यादयोऽशुद्धाः प्रयोगाश्च सुबहवो दृश्यन्ते।

डा.माधवभट्टराइ-केशवशरणोपाध्यायाभ्यां लिखितत्वेन डा.टीकारामपन्थिप्रभृतिभिः परिमार्जितत्वेन पाठ्यक्रमविकासकेन्द्रेण प्रकाशिते (२०५६) संस्कृत-माध्यमिक-विद्यालयस्य नवम्याः कक्षायाः "अनिवार्यसंस्कृतभाषा" इतिनामके पाठ्यपुस्तके "शोभायमानम्" (पृ.२), "द्वात्रिंशद्वर्षीयः" (पृ.१७), "मातृपित्रोः" (पृ.१७), "पूर्वीयदर्शनस्य" (पृ.३७), "पूर्वरूपमेकादेशे" (पृ.१२८) इत्यादयोऽशुद्धाः प्रयोगाः, "अनुष्टुववृत्तम्" (पृ.१३), "स्नेहवत्सला" (पृ.१५), "वरम्=श्रेष्ठम्" (पृ.३१), "गुरवश्छात्रानित्थं शिक्षन्ते स्म" (पृ.३४), "स्वर्गङ्गतायां संस्कृतभाषायाम्" (पृ.४२), "आदिरन्त्येन सहेता " " सूत्रम् (इत्संज्ञकम्, प्रत्याहारसंज्ञकम्)" (पृ.१११), "एकमात्रिकोकारो-च्चारणकालसदृशस्याऽचो ह्रस्वसंज्ञा" (पृ.११२) इत्यादयो दुष्टु प्रयोगा असङ्गताः प्रयोगाश्च सुबहवो दृश्यन्ते। उदात्तादीनां स्वप्रदर्शिताच्-प्रयत्नानामगणनात् "सर्वेषां वर्णानां प्रत्येकं चत्वारो बाह्यप्रयत्नाः" (पृ.११४) इति प्रतिपादनं च तत्र वदतोव्याघातेन दोषेण दूषितं दृश्यते।

दामोदरकोइराला-तीर्थराजाचार्य-ऋषिरामपोखेलादीनां सहयोगेन गोपीकृष्णोपाध्यायगौतमादि-परिष्कृतत्वेन पाठ्यक्रमविकास-केन्द्रेण प्रकाशिते (२०५७) "कर्मकाण्डम्" इतिनामके संस्कृत-माध्यमिक-विद्यालयस्य नवम्याः कक्षायाः पाठ्यपुस्तके च श्रावणीसङ्कल्पे "दक्षिणगोलावलम्बिनि श्रीमार्तण्डमण्डले" (पृ.१), "जलमादाय निषिञ्चनञ्च" (पृ.३), "विश्वमायुर्व्यष्णवै" (पृ.७), "अन्यानि"

(पृ.४१), **"समस्तवर्गादिभिः सहित अमुकशर्मा"** (पृ.४४), **"ततः कलशे गणपतेः दुर्गायाः वायोः आकाशस्य अश्विनीकुमारयोश्च पञ्चोपचारैः पूजयेत्"** (पृ.४५) इत्यादयोऽनेके दुष्टु प्रयोगा अशुद्धाः प्रयोगाश्च दृश्यन्ते। धार्मिक-कर्मकाण्डपुस्तकत्वेन लोके प्रचार्यमाणे पुस्तके एतादृश्योऽशुद्धयः सर्वथाऽक्षम्या इत्यत्र आस्तिकानां सर्वेषां विदुषां सम्मतिः स्यादेव। संस्कृतविश्वविद्यालयेन प्रकाशितं कर्मकाण्ड-भास्करपुस्तकं च (२०५४, २०५७) वैदिकशाखाव्यवस्थादृष्ट्या विलोकनेऽव्यवस्थितम्, विषयवस्तुदृष्ट्या विलोकने अशुद्धिभिः पूर्णम्, वर्णविकलैः पदविकलैश्च वेदमन्त्रैर् युक्तम्, भाषादृष्ट्या विलोकनेऽप्यनेकत्र भ्रष्टम्, नैतिकदृष्ट्या विलोकनेऽपि रामोपाध्यायादिकृताना-मन्त्यकर्मपद्धत्यादीनां दधिरामकृतत्वेन प्रचारितत्वान् निकृष्टं च दृश्यते; अन्त्यकर्मपद्धतिपुस्तकमपि (२०५६) तादृशमेव विलोक्यते।

प्राध्यापक-नीलमणिढुङ्गानालिखितत्वेन संस्कृतविश्वविद्यालयेन प्रकाशिते संस्कृतशिक्षणाभ्यासे प्रथमे भागे "अपठावः", "अपठामः" (प्र.सं.२०५३, पृ.१९; द्वि.सं.२०५७, पृ.३०)), "ते अशेरन्त" (२०५३, पृ.२२, २०५७ पृ.३३), "माता पुत्रं स्निह्यति" (२०५३, पृ.२९, २०५७ पृ.४२), "दुग्धं विक्रीणन्ति" (२०५३, पृ.३६; २०५७ पृ.४८) "बालिके रुदतः" (२०५३, पृ.५१; २०५७ पृ.५९), संस्कृतशिक्षणा-भ्यासे द्वितीये भागे "अष्टत्रिंशत्" (प्र.सं.२०५३, पृ.४६; प्रथमभागे द्वि.सं.२०५७, पृ.६३) "गोदावरीतीरे=भागिरथीतटे" (२०५७, पृ.१), "मूषकेन" (प्र.सं.२०५३, पृ.३३, द्वि.सं.२०५७, पृ.३७); संस्कृतशिक्षणाभ्यासे तृतीये भागे (२०५७) च "येषां वर्णानां खण्डश उच्चारण न भवति ते खण्डेतरवर्णा निगद्यन्ते, *एत एव यमा इति कथ्यन्ते*। अनुस्वारानुनासिकविसर्गानुदात्तोदात्तस्वरितस्वरादयः खण्डेतर-वर्णाः सन्ति" (पृ.२), "तत्र स्पृष्टं प्रयत्नं स्पर्शानाम्" (पृ.३) "रमाशब्दः ........ सीता सीते सीताः" (पृ.१०८), "नदीशब्दः ........ गौरी गौर्यौ गौर्यः" (पृ.१०८), "भानुशब्दः ........ विधु, विधू विधवः" (पृ.१०९) इत्यादयोऽशुद्धाः विसंस्थुलाश्च प्रयोगाः सुबहवो दृश्यन्ते। प्राध्यापक-नीलमणि-ढुङ्गानामहाशयेन उपप्राध्यापक-ध्रुवप्रसाद-जवालीमहाशयेन च लिखितत्वेन संस्कृतविश्वविद्यालयेन प्रकाशिते (२०५५) संस्कृतरचनाप्रकाशे (प्रथमे भागे) कर्मन्-प्रातिपदिकस्य अहन्-प्रातिपदिकस्य, दा-तुद-रुध्-कृ-चि-क्री-धातूनां च रूपावली विकला दत्ता दृश्यते। कर्मन्-प्रातिपदिकस्य (पृ.९६) सम्बुद्धौ कर्म इति रूपं तत्र न दृश्यते, अहन्-प्रातिपदिकस्य (पृ.९६,९७) प्रथमायां द्वितीयायाश्च द्विवचने अह्नी इति रूपे च तत्र न विलोक्येते। उक्तानां धातूनामात्मनेपदं रूपाणि च तत्र न प्रतिपादितानि। उक्तानां धातूनां परस्मैपदे आत्मनेपदे च रूपाणि संस्कृत-माध्यमिकविद्यालये सप्तम्यां कक्षायां पठनीयानि स्वीक्रियन्ते, विद्यापीठे उत्तरमध्यमकक्षायां तु केवल परस्मैपदे एव रूपाणि पठनीयानि मन्यन्त इति संस्कृतविश्वविद्यालयप्राज्ञिकपरिषत्पारिषद्यानां विद्वद्धौरेयाणां चाऽत्र विशिष्टा योग्यता-ऽभिव्यज्यते। प्राध्यापक-नीलमणि-ढुङ्गानामहाशयेन लिखितत्वेन संस्कृतविश्वविद्यालयेन प्रकाशिते (२०५५) संस्कृतरचनाप्रकाशस्य द्वितीये भागे च "नमावहे" (पृ.२४), "जपामहे" (पृ.२४), "अपठाव, अपठामः" (पृ.२६), "अभर्त्सयतम्" (पृ.२७), "अशेरन्त" (पृ.२९), "रामः भ्रमताम्" इ. (पृ.३५), "अष्टत्रिंशत्" (पृ.५५) इत्यादयः सुबहवः अशुद्धाः प्रयोगा दृश्यन्ते।

उक्तैः पाठ्यपुस्तकैः सहाऽस्माकं पाठ्यपुस्तकानां विचारे कृते अस्माकं पाठ्यपुस्तकानामुक्तेभ्यः पाठ्यपुस्तकेभ्यः शुद्धतरता समीचीनतरता च विवेकशीलानां तटस्थानां संस्कृतशिक्षाप्रेमिणां कृते स्फुटैव स्यात्। तथापि सम्प्रशासनापाश्रयबलात् तादृशानि अशुद्धिपूर्णानि पुस्तकानि पठ्यन्ते पाठ्यन्ते च, अस्मदीयानि पुस्तकानि तूपेक्षितानि सन्ति। अस्माभिरुक्ताना प्रायः सर्वेषां पाठ्यपुस्तकानां त्रुटयः स्थालीपुलाकन्यायेन समयेसमये प्रदर्शिता एव (गोरखापत्रे २०४१।११।१०, २०४१।१२।१, २०४३।३।२५, २०४३।११।४, २०४३।११।२८, २०५४।५।२९, २०५५।८।५; कान्तिपुरपत्रे २०५३।१।५, २०५३।४।२; नयाँकरेण्टपत्रे २०५५।५।२; अन्यत्र च)। तथापि नैवाऽन्ये शिक्षका न च परीक्षार्थिनस् तादृशीनामशुद्धीनां विषये व्याहर्तुमुत्सहन्ते, न चाऽधिकृताः शासका वा अस्माभिर् व्याहृतं शृण्वन्ति, न चाऽभिभावका अस्माभिरुक्तं बुध्यन्ते। परीक्षार्थिनो वृत्त्या प्रमाणपत्रलाभेन जीविकालाभप्रत्याशया च सन्तुष्टाः, शिक्षका वेतनलाभेन परितुष्टाः, अधिकृताः शासकाश्च लोकवञ्चनेन कृतकृत्याः, पुस्तकपरीक्षकाः पुस्तकपरिमार्जकाश्च समुपवेशादिलभ्यभक्त-पारिश्रमिक-द्रव्यादिनैव पूर्णमनोरथाः, अभिभावकाश्च सेवया वा वञ्चनया वा दण्डपरिहारवत्या दस्युवृत्त्या वाऽपि करिष्यमाणं पुत्रादीनां द्रव्योपार्जनमुदीक्ष्य समाश्वस्ता इव प्रतीयन्ते। हन्त अस्माकं समाजस्यैतादृशी दुर्गतिरनुभवपथमायाति। अत्र चेदं सुभाषितं स्मृतिपथमागच्छति–

> न्यायः खलैः परिहृतश् चलितश्च धर्मः कालः कलिः कलुष एव परं प्रवृत्तः।
> प्रायेण दुर्जनजनः प्रभविष्णुरेव निश्चक्रिकः परिभवास्पदमेव साधुः॥ इति।

एतादृश्यां शोचनीयायां परिस्थितावपि कतिपये संस्कृतभाषाभक्ता अस्माकं व्यावहारिकसंस्कृतभाषापाठ्यपुस्तकानि स्वेच्छया स्वतन्त्रतया प्रेम्णा च पठित्वा लाभं प्राप्नुवन्तः सन्तीति ज्ञात्वा कोऽपि सन्तोषो भवति।

एवं चाऽल्पैरेव जनैरस्माकं पाठ्यपुस्तकानामुपयुज्यमानत्वादस्माकं पाठ्यपुस्तकमालायाः प्रकाशनस्य गतौ मन्थरताऽऽपतिताऽस्ति। एतादृशीं स्थितिं ज्ञात्वा तां गतिं तीव्रां कर्तुकामैर् जनैरेतेषां पुस्तकानां समाजे प्रचारस्य विद्यालयेषु प्रयोगस्य च वर्धने साहाय्यं कार्यमिति विज्ञाप्यते।

## ८. साधुवादार्पणम्

एतस्य पुस्तकस्य रचनायां सर्वविधानि निर्देशनानि दत्त्वा एतत् पुस्तकमेतादृशरूपेण निष्पन्नं कर्तुं पथप्रदर्शनं कृतवतां सुगृहीतनाम-पूजनीय-तातपादानामाचार्य-शिवराज-कौण्डिन्न्यायनमहोदयानां सान्निध्यमेवैतस्य पुस्तकस्य प्रकाशने सर्वदा सर्वथा प्रेरकं सफलतामूलं चास्तीति विज्ञापयामि।

एतस्य पुस्तकस्य मुद्रणाय दानसङ्कलन-मुद्रणादिकर्मणां सुसम्पादने विशिष्टं नियामकत्वं कृत्वा एतस्य पुस्तकस्य एतादृशरूपेण प्रकाशने महत् कार्यं कृतवतः श्रीमतोऽग्रजान् शुक्लयजुर्वेदाचार्यान् आमोदवर्धन-कौण्डिन्न्यायनमहोदयान् प्रति कृतज्ञतां व्यक्तीकरोमि। सुसङ्गणकाक्षरयोजने भूरिं परिश्रमं कृतवतेऽनुजाय ब्रह्ममीमांसाचार्याय सुमोदवर्धनकौण्डिन्न्यायनाय प्रमुद्रणसंशोधनादिकार्ये सहयोगं कृतवतोऽनुजान् सम्मोदवर्धनकौण्डिन्न्यायन-वशंवदाम्बाकौण्डिन्न्यायन्यतिसम्मोदवर्धनकौण्डिन्न्यायनान् प्रति साधुवादान् व्याहरामि। वशंवदाम्बा चित्राण्यप्यलेखीदिति तस्यै विशेषतः साधुवादान् ददाम्यहम्–

२०५७ तमवैक्रमाब्दस्य
निरयणसौरमीनमासस्य पञ्चदशे दिवसे।

**प्रमोदवर्धनः कौण्डिन्न्यायनः**
स्वाध्यायशालाकुटुम्बगृहपतिगृह्यः

# स्तुतिपद्यानि

## अग्निस्तोत्रम्

नमस्यामि महायोगं कृशानुं गहनं परम्।
दाहकं सर्वभूतानामीशानं कालरूपिणम्॥

नमस्ये पावकं देवं साक्षिणं विश्वतोमुखम्।
आत्मानं दीप्तवपुषं सर्वभूतहृदि स्थितम्॥

प्रपद्ये तत् परं तत्त्वं वरेण्यं सवितुः शिवम्।
भर्गमग्निं परं ज्योती रक्ष मां हव्यवाहन॥

## वायुस्तोत्रम्

वसोऽन्तरिक्षसद् वायो प्राणात्मलँ लोकजीवन।
विश्वकर्मन् पृथग्वर्त्मन् पूषन्निन्द्रसहायक॥

आदित्यसूत सूत्रात्मन् वृष्टेरीशाऽनिरुक्तक।
द्यावापृथिव्योरधिप विभो तुभ्यं नमोनमः॥

## सूर्यस्तोत्रम्

आदिदेव नमस् तुभ्यं प्रसीद मम भास्कर।
दिवाकर नमस् तुभ्यं प्रभाकर नमोऽस्तु ते॥

श्रीसूर्यं जगदात्मानं ब्रह्मविष्णुहरात्मकम्।
महापापहरं देवं प्रणमामि पुनःपुनः॥

नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने॥

## प्रथमः पाठः

## प्रथमायाः विभक्तेः प्रयोगाः

बालकः खेलति। बालकः रोदिति। बालिका शेते। बालिका हसति। फलं पतति। कविः लिखति। अग्निः ज्वलति। पशुः चरति। भगिनी नृत्यति। नदी वहति।

विद्यार्थी पठति।

विद्यार्थिनौ पठतः।

विद्यार्थिनः पठन्ति।

| | | |
|---|---|---|
| हस्ती तिष्ठति। | हस्तिनौ गच्छतः। | हस्तिनः स्नान्ति। |
| एकः प्रहरी तिष्ठति। | द्वौ प्रहरिणौ तिष्ठतः। | त्रयः प्रहरिणः तिष्ठन्ति। |
| एका प्रहरिणी तिष्ठति। | द्वे प्रहरिण्यौ तिष्ठतः। | पञ्च प्रहरिण्यः तिष्ठन्ति। |
| श्वेतः पक्षी उड्डयते। | श्वेतौ पक्षिणौ उड्डयेते। | श्वेताः पक्षिणः उड्डयन्ते। |
| एकः तीर्थयात्री गच्छति। | द्वौ तीर्थयात्रिणौ गच्छतः। | त्रयः तीर्थयात्रिणः गच्छन्ति। |
| चतुरः ब्रह्मचारी याति। | चतुरौ ब्रह्मचारिणौ पठतः। | चतुराः ब्रह्मचारिणः पठन्ति। |
| मम मित्रं धनि अस्ति। | तव मित्रे धनिनी स्तः। | अस्माकं मित्राणि धनीनि सन्ति। |
| मम मित्रं मेधावि अस्ति। | तव मित्रे मेधाविनी स्तः। | अस्माकं मित्राणि मेधावीनि सन्ति। |
| सुन्दरी नर्तकी नृत्यति। | सुन्दर्यौ नर्तक्यौ नृत्यतः। | सुन्दर्यः नर्तक्यः नृत्यन्ति। |
| भ्राता खेलति। | भ्रातरौ खेलतः। | भ्रातरः खेलन्ति। |
| कर्ता कर्म कुरुते। | कर्तारौ कर्म कुर्वाते। | कर्तारः कर्म कुर्वते। |
| कुशलः वक्ता भाषते। | कुशलौ वक्तारौ भाषेते। | कुशलाः वक्तारः भाषन्ते। |
| श्रद्धालुः श्रोता शृणोति। | श्रद्धालू श्रोतारौ शृणुतः। | श्रद्धालवः श्रोतारः शृण्वन्ति। |
| दयालुः दाता ददाति। | दयालू दातारौ दत्तः। | दयालवः दातारः ददति। |
| धनी मनुष्यः दानं दत्ते। | धनिनौ मनुष्यौ दानं ददाते। | धनिनः मनुष्याः दानं ददते। |
| धनिनी नारी दानं ददाति। | धनिन्यौ नार्यौ दानं दत्तः। | धनिन्यः नार्यः दानं ददति। |
| धनि मित्रं साहाय्यं कुरुते। | धनिनी मित्रे साहाय्यं कुर्वाते। | धनीनि मित्राणि साहाय्यं कुर्वते। |

विद्वद्गोष्ठी भारतं काव्यचिन्ता तन्त्रीवाद्यं सुप्रयुक्तं च गेयम्।
इष्टा भार्या तत्समानं च मित्रं सद्यः शोकं नाशयन्तीह सप्त॥

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

<table>
<tr><td>क)<br>मेधावी<br>मेधाविनौ<br>मेधाविनः<br>धनी<br>धनिनौ<br>धनिनः</td><td>विद्यार्थी<br>विद्यार्थिनौ<br>विद्यार्थिनः<br>ब्रह्मचारी<br>ब्रह्मचारिणौ<br>ब्रह्मचारिणः<br>भ्राता<br>भ्रातरौ<br>भ्रातरः<br>मनुष्यः<br>मनुष्यौ<br>मनुष्याः</td><td rowspan="3">उपविशति<br>उपविशतः<br>उपविशन्ति<br>पठति<br>पठतः<br>पठन्ति<br>ददाति<br>दत्तः<br>ददति<br>दत्ते<br>ददाते<br>ददते<br>खेलति<br>खेलतः<br>खेलन्ति<br>भ्रमति<br>भ्रमतः<br>भ्रमन्ति<br>लिखति<br>लिखतः<br>लिखन्ति<br>नृत्यति<br>नृत्यतः<br>नृत्यन्ति</td></tr>
<tr><td>ख)<br>सुन्दरी<br>सुन्दर्यौ<br>सुन्दर्यः<br>धनिनी<br>धनिन्यौ<br>धनिन्यः<br>मेधाविनी<br>मेधाविन्यौ<br>मेधाविन्यः</td><td>ब्रह्मचारिणी<br>ब्रह्मचारिण्यौ<br>ब्रह्मचारिण्यः<br>भगिनी<br>भगिन्यौ<br>भगिन्यः<br>नारी<br>नार्यौ<br>नार्यः</td></tr>
<tr><td>ग)<br>मेधावि<br>मेधाविनी<br>मेधावीनि<br>धनि<br>धनिनी<br>धनीनि</td><td>मित्रम्<br>मित्रे<br>मित्राणि</td></tr>
</table>

## द्वितीयायाः विभक्तेः प्रयोगाः

**छात्रः घटिकां विलोकयति। सारसः मत्स्यान् खादति। गोपालः पशून् चारयति। अम्बा अग्निं ज्वालयति। भगिनी पुष्पाणि जिघ्रति।**

**हस्तिपकः हस्तिनम् आरोहति।**

**छात्राः हस्तिनौ विलोकयन्ति।**

**सिंहः हस्तिनः मारयति।**

| | | |
|---|---|---|
| **गुरुः विद्यार्थिनं प्रश्नं पृच्छति।** | **गुरुः विद्यार्थिनौ उपदिशति।** | **गुरुः सर्वान् विद्यार्थिनः पाठयति।** |
| **शिशुः पक्षिणं पश्यति।** | **त्वं पक्षिणौ पालयसि।** | **अहं पक्षिणः पश्यामि।** |
| **त्वं ज्ञानिनम् उपास्व।** | **यूयं ज्ञानिनौ नमत।** | **सर्वे जनाः ज्ञानिनः मानयन्तु।** |
| **अग्रजः भ्रातरं सान्त्वयति।** | **भगिनी भ्रातरौ पाठयति।** | **अग्रजाः भ्रातॄन् पाठयन्ति।** |
| **अहं मेधावि मित्रं पृच्छामि।** | **त्वं मेधाविनी मित्रे विह्वयस्व।** | **वयं मेधावीनि मित्राणि प्रशंसामः।** |

| | |
|---|---|
| **आचार्यः ब्रह्मचारिणम् अध्यापयति।** | **शूरः निषादी कातरौ रथिनौ जयति।** |
| **महारथः रथिनं जयति।** | **प्राड्विवाकः साक्षिणः पृच्छति।** |
| **भृत्याः स्वामिनं स्तुवन्ति।** | **पान्थः प्रहरिणं मार्गं पृच्छति।** |
| **जनाः कार्यकर्तारं स्तुवन्ति।** | **सर्वे दातारं प्रशंसन्ति।** |
| **श्रोतारः वक्तारं विलोकयन्ति।** | **वक्तारः श्रोतॄन् श्रावयन्ति।** |

नाऽदत्तमिच्छेन् न पिबेच् च मद्यं जीवान् न हिंसेन् न वदेच् च मिथ्या।
परस्य दारान् मनसाऽपि नेच्छेद् यः स्वर्गमिच्छेद् गृहवत् प्रवेष्टुम् ॥

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

(क)

| | | |
|---|---|---|
| शिक्षकः<br>भगिनी<br>अग्रजः<br>मार्गणः<br>विद्यार्थी<br>विद्यार्थिनी | विद्यार्थिनम्<br>विद्यार्थिनौ<br>विद्यार्थिनः<br>विद्यार्थिनीम्<br>विद्यार्थिन्यौ<br>विद्यार्थिनीः<br>दातारम्<br>दातारौ<br>दातॄन्<br>भ्रातरम् | आज्ञापयति<br>प्रतीक्षते<br>रक्षति<br>विह्वयते<br>पाठयति<br>शिक्षयति<br>पश्यति |

(ख)

| | | | |
|---|---|---|---|
| जनाः<br>मार्गणाः<br>निर्धनाः | धनि<br>धनिनी<br>धनीनि<br>दातृ<br>दातृणी<br>दातृणि<br>कुशलम्<br>कुशलौ<br>कुशलान्<br>उदारम् | कुलम्<br>कुले<br>कुलानि<br>मित्रम्<br>मित्रे<br>मित्राणि<br>वक्तारम्<br>वक्तारौ<br>वक्तॄन्<br>दातारम् | भिक्षन्ते<br>प्रशंसन्ति<br>न निन्दन्ति<br>प्रोत्साहयन्ति<br>वर्णयन्ति |

वेदप्रणिहितो धर्मो ह्यधर्मस् तद्विपर्ययः।
वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम॥
वर्णानामाश्रमाणां च सदाचारः पृथक्पृथक्।
सामान्यः सविशेषश् च स्वधर्मः स उदीर्यते॥
स्वकर्मविच्युताः पापा वर्णाश्रमविवर्जिताः।
नरके पूयसम्पूर्णे क्लिश्यन्ते ह्ययुतं समाः॥
लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च।
न धर्मे जायते बुद्धिर् व्याजाद् धर्मं करोति च॥
धर्मः स्वल्पोऽपि लोकेऽस्मिन् यदि सम्यगुपासितः।
द्विजदेवप्रसादेन स याति बहुविस्तरम्॥
नाऽस्ति क्षमासमा माता नाऽस्ति कीर्तिसमं धनम्।
नाऽस्ति ज्ञानसमो लाभो न च धर्मसमः पिता॥
जितेन्द्रियश् च शास्त्रज्ञो द्विजदेवार्चने रतः।
एको रक्षति धर्मात्मा पुरं ग्रामं जनं कुलम्॥
धर्मश् चार्थश् च कामश् च त्रितयं जीविते फलम्।
एतत् त्रयमवाप्तव्यमधर्मपरिवर्जनात्॥
धर्मादर्थं च कामं च मोक्षं चैव त्रयं लभेत्।
तस्माद् धर्मं समीहेत विद्वान् यः स बुधः स्मृतः॥
अद्रोहः सर्वभूतानां कर्मणा मनसा गिरा।
अनुग्रहश् च दानं च सतां धर्मः सनातनः॥
अहिंसा सत्यमक्रोध आनृशंस्यं दमस् तथा।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम्॥
आयुर् विनश्यत्ययशो विवर्धते
भाग्यं क्षयं याति च दुर्गतिर् भवेत्।
स्वर्गाच् च्यवन्ते पितरः पुरातना
धर्मव्यवेतस्य नरस्य निश्चितम्॥
तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर् न कल्कः।
प्रसह्य वित्ताऽऽहरणं न कल्कस्
तान्येव भावोपहतानि कल्कः॥

(स्मृतिपुराणेतिहासादिभ्यः)

## दीर्घसन्धिः

| असंहितायाम् | संहितायाम् |
|---|---|
| **एतत् पुस्तकं मम अस्ति।** | **एतत् पुस्तकं ममाऽस्ति।** |
| **मम भ्राता अस्ति।** | **मम भ्राताऽस्ति।** |
| **विद्यालयात् बालिका आगच्छति।** | **विद्यालयात् बालिकाऽऽगच्छति।** |
| **मम भगिनी इतः आगच्छति।** | **मम भगिनीतः आगच्छति।** |
| **हंसः साधु उड्डयते।** | **हंसः साधूड्डयते।** |

अवर्णाद् अवर्णे परे पूर्वपरयोः स्थाने दीर्घोऽवर्णो भवति, इवर्णाद् इवर्णे परे पूर्वपरयोः स्थाने दीर्घ इवर्णो भवति, उवर्णाद् उवर्णे परे पूर्वपरयोः स्थाने दीर्घ उवर्णो भवति।

## विसर्गसन्धिः

| | |
|---|---|
| **बालकः अगमत्।** | **बालकोऽगमत्।** |
| **बालकः आगमत्।** | **बालक आगमत्।** |
| **बालकः इक्षुं खादति।** | **बालक इक्षुं खादति।** |
| **बालकः उक्षाणं विलोकयति।** | **बालक उक्षाणं विलोकयति।** |
| **कृषकः ऋणं गृह्णाति।** | **कृषक ऋणं गृह्णाति।** |
| **गोपालः एडकं चारयति।** | **गोपाल एडकं चारयति।** |
| **शिक्षकः ऐरावतं वर्णयति।** | **शिक्षक ऐरावतं वर्णयति।** |
| **बालकः ओदनं खादति।** | **बालक ओदनं खादति।** |
| **अस्वस्थः औषधं पिबति।** | **अस्वस्थ औषधं पिबति।** |
| **छात्रः कलमेन लिखति।** | **छात्रः कलमेन लिखति।** |
| **बालकः खेलति।** | **बालकः खेलति।** |
| **कुक्कुरः गच्छति।** | **कुक्कुरो गच्छति।** |
| **महिषः घर्मार्तः अस्ति।** | **महिषो घर्मार्तः अस्ति।** |
| **बालकः ङावकं पश्यति।** | **बालको ङावकं पश्यति।** |
| **बालकः चत्वरे खेलति।** | **बालकश् चत्वरे खेलति।** |
| **बालकः छत्रम् ऊर्णोति।** | **बालकश् छत्रम् ऊर्णोति।** |
| **पान्थः जलं पिबति।** | **पान्थो जलं पिबति।** |
| **छात्रः झरे स्नाति।** | **छात्रो झरे स्नाति।** |
| **बिडालः ञुञुवे।** | **बिडालो ञुञुवे।** |
| **मनुष्यः टङ्केन पाषाणं दारयति।** | **मनुष्यष् टङ्केन पाषाणं दारयति।** |

| | |
|---|---|
| बालकः ठक्कुरं पश्यति। | बालकष् ठक्कुरं पश्यति। |
| कः डमरुं वादयते? | को डमरुं वादयते? |
| भूतवैद्यः ढक्कां वादयते। | भूतवैद्यो ढक्कां वादयते। |
| बालकः णकारं परिचिनोति। | बालको णकारं परिचिनोति। |
| मनुष्यः तडागे स्नाति। | मनुष्यस् तडागे स्नाति। |
| मनुष्यः थलितं कुरुते। | मनुष्यस् थलितं कुरुते। |
| बालकः दधि खादति। | बालको दधि खादति। |
| कृषकः धान्यं रोपयति। | कृषको धान्यं रोपयति। |
| बालकः नखान् निकृन्तति। | बालको नखान् निकृन्तति। |
| पुत्रः पत्रं पठति। | पुत्रः पत्रं पठति। |
| बालकः फलं खादति। | बालकः फलं खादति। |
| मनुष्यः बदरं टिप्पति। | मनुष्यो बदरं टिप्पति। |
| गृहस्थः भिक्षवे भिक्षां ददाति। | गृहस्थो भिक्षवे भिक्षां ददाति। |
| बालकः मधु लेढि। | बालको मधु लेढि। |
| बालकः याति। | बालको याति। |
| बालकः रोदिति। | बालको रोदिति। |
| बालकः पुनः रोदिति। | बालकः पुना रोदिति। |
| वृद्धः लगुडं लाति। | वृद्धो लगुडं लाति। |
| मुनयः वने निवसन्ति। | मुनयो वने निवसन्ति। |
| बालकः शेते। | { बालकः शेते। |
| | { बालकश् शेते। |
| बालकः षट्पदं पश्यति। | { बालकः षट्पदं पश्यति। |
| | { बालकष् षट्पदं पश्यति। |
| छात्रः सखायं विह्वयते। | { छात्रः सखायं विह्वयते। |
| | { छात्रस् सखायं विह्वयते। |
| बालकः हसति। | बालको हसति। |
| सः अद्य आगच्छति। | सोऽद्य आगच्छति। |
| सः आचार्यः अस्ति। | स आचार्यः अस्ति। |
| सः कर्म कुरुते। | स कर्म कुरुते। |
| सः ग्रामं गच्छति। | स ग्रामं गच्छति। |
| एषः अनुभवी विद्यते। | एषोऽनुभवी विद्यते। |
| एषः इक्षुं खादति। | एष इक्षुं खादति। |

एषः कन्दुकेन खेलति।
एषः गां चारयति।
बालकाः अम्बया सह उपविशन्ति।
बालकाः आवाभ्यां सह खेलन्ति।
बालकाः इतिहासं पठन्ति।
बालकाः उद्यानं गच्छन्ति।
गोपालाः एडकान् चारयन्ति।
बालकाः ऐच्छिकं संस्कृतं पठन्ति।
बालकाः ओदनं खादन्ति।
अस्वस्थाः औषधं पिबन्ति।
बालिकाः खेलन्ति।
पूजकाः घण्टां वादयन्ते।
बालिकाः छायायाम् उपविशन्ति।
बालकाः झोलिकां वहन्ति।
बालकाः ठक्कुरेण सह संलपन्ति।
पूजकाः डमरुं वादयन्ते।
भूतवैद्याः ढक्कां वादयन्ते।
मनुष्याः तारकाः पश्यन्ति।
नवरात्रे जनाः देवीं पूजयन्ति।
बालिकाः फलानि खादन्ति।
गृहस्थाः भिक्षवे भिक्षां ददति।
वीराः युद्धात् न बिभ्यति।
बालकाः लेखन्या लिखन्ति।
प्रभाते कुक्कुटाः वाश्यन्ते।
मनुष्याः शुकान् पालयन्ति।

बालकाः षट्पदेभ्यो बिभ्यति।

ग्रहाः सूर्यं परिक्रामन्ति।

एष कन्दुकेन खेलति।
एष गां चारयति।
बालका अम्बया सह उपविशन्ति।
बालका आवाभ्यां सह खेलन्ति।
बालका इतिहासं पठन्ति।
बालका उद्यानं गच्छन्ति।
गोपाला एडकान् चारयन्ति।
बालका ऐच्छिकं संस्कृतं पठन्ति।
बालका ओदनं खादन्ति।
अस्वस्था औषधं पिबन्ति।
बालिकाः खेलन्ति।
पूजका घण्टां वादयन्ते।
बालिकाश् छायायाम् उपविशन्ति।
बालका झोलिकां वहन्ति।
बालकाष् ठक्कुरेण सह संलपन्ति।
पूजका डमरुं वादयन्ते।
भूतवैद्या ढक्कां वादयन्ते।
मनुष्यास् तारकाः पश्यन्ति।
नवरात्रे जना देवीं पूजयन्ति।
बालिकाः फलानि खादन्ति।
गृहस्था भिक्षवे भिक्षां ददति।
वीरा युद्धात् न बिभ्यति।
बालका लेखन्या लिखन्ति।
प्रभाते कुक्कुटा वाश्यन्ते।

{ मनुष्याः शुकान् पालयन्ति।
{ मनुष्याश् शुकान् पालयन्ति।

{ बालकाः षट्पदेभ्यो बिभ्यति।
{ बालकाष् षट्पदेभ्यो बिभ्यति।

{ ग्रहाः सूर्यं परिक्रामन्ति।
{ ग्रहास् सूर्यं परिक्रामन्ति।

| | |
|---|---|
| बालकाः हिमभल्लूकं पश्यन्ति। | बालका हिमभल्लूकं पश्यन्ति। |
| अग्निः अज्वालीत्। | अग्निरज्वालीत्। |
| हरिः आयासीत्। | हरिरायासीत्। |
| हरिः इक्षुमखादीत्। | हरिरिक्षुमखादीत्। |
| कविः उज्जयिनीं वर्णयति। | कविरुज्जयिनीं वर्णयति। |
| हरिः ऋषिं प्रणमति। | हरिरृषिं प्रणमति। |
| कविः ऐरावतं वर्णयति। | कविरैरावतं वर्णयति। |
| कविः काव्यं करोति। | कविः काव्यं करोति। |
| कविः चत्वरे उपविशति। | कविश् चत्वरे उपविशति। |
| कविः ठक्कुरं वर्णयति। | कविष् ठक्कुरं वर्णयति। |
| कविः तडागे स्नाति। | कविस् तडागे स्नाति। |
| हरिः नग्नो वर्तते। | हरिर् नग्नो वर्तते। |
| कविः पानीयं पिबति। | कविः पानीयं पिबति। |
| कविः फुल्लानि जिघ्रति। | कविः फुल्लानि जिघ्रति। |
| हरिः भल्लूकात् अभैषीत्। | हरिर् भल्लूकात् अभैषीत्। |
| हरिः मन्दिरम् अगमत्। | हरिर् मन्दिरम् अगमत्। |
| चिरात् मातरं दृष्ट्वा हरिः रमते। | चिरात् मातरं दृष्ट्वा हरी रमते। |
| हरिः लम्बपुच्छं वानरमपश्यत्। | हरिर् लम्बपुच्छं वानरमपश्यत्। |
| कविः शैलान् वर्णयति। | { कविः शैलान् वर्णयति।<br>कविश् शैलान् वर्णयति। |
| कविः षट्पदं वर्णयति। | { कविः षट्पदं वर्णयति।<br>कविष् षट्पदं वर्णयति। |
| हरिः सारिकां पालयति। | { हरिः सारिकां पालयति।<br>हरिस् सारिकां पालयति। |
| कविः हिमालयं वर्णयति। | कविर् हिमालयं वर्णयति। |
| शिशुः अग्रे शेते। | शिशुरग्रे शेते। |
| शिशुः ओदनं न खादति। | शिशुरोदनं न खादति। |
| शिशुः औषधं लेढि। | शिशुरौषधं लेढि। |
| गुरुः कालपट्टे लिखति। | गुरुः कालपट्टे लिखति। |
| शिशुः खेलितुम् इच्छति। | शिशुः खेलितुम् इच्छति। |

| | |
|---|---|
| गुरुः चपलान् बालकान् उपदिशति। | गुरुश् चपलान् बालकान् उपदिशति। |
| गुरुः पञ्चतन्त्रकं पाठयति। | गुरुः पञ्चतन्त्रकं पाठयति। |
| श्रद्धालुः ब्राह्मणाय दानं ददाति। | श्रद्धालुर् ब्राह्मणाय दानं ददाति। |
| गुरुः राजानम् उपदिशति। | गुरू राजानम् उपदिशति। |
| धेनुः वत्साय दुग्धं ददाति। | धेनुर् वत्साय दुग्धं ददाति। |
| शिशुः शेते। | शिशुः शेते।<br>शिशुश् शेते। |
| गुरुः षोडश छात्रान् पाठयति। | गुरुः षोडश छात्रान् पाठयति।<br>गुरुष् षोडश छात्रान् पाठयति। |
| श्रद्धालुः सुखम् अनुभवति। | श्रद्धालुः सुखम् अनुभवति।<br>श्रद्धालुस् सुखम् अनुभवति। |
| शिशुः हसति। | शिशुर् हसति। |
| तव स्वसृः आह्वय। | तव स्वसृराह्वय। |
| त्वं स्वसृः किमर्थम् आह्वयसि। | त्वं स्वसृः किमर्थम् आह्वयसि। |
| नान्दीश्राद्धात् पूर्वं षोडशमातृः पूजयन्ति। | नान्दीश्राद्धात् पूर्वं षोडशमातृः पूजयन्ति। |
| अग्नेः अकाले ज्वालनं न कार्यम्। | अग्नेरकाले ज्वालनं न कार्यम्। |
| ऋषेः आस्ये सरस्वती निवसति। | ऋषेरास्ये सरस्वती निवसति। |
| अग्नेः ज्वाला रक्ता भवति। | अग्नेर् ज्वाला रक्ता भवति। |
| बालकैः अग्निः न ज्वालनीयः। | बालकैरग्निः न ज्वालनीयः। |
| बालकैः कन्दुकेन खेलनीयम्। | बालकैः कन्दुकेन खेलनीयम्। |
| गुरोः अग्रे पादौ न प्रसारणीयौ। | गुरोरग्रे पादौ न प्रसारणीयौ। |
| भिक्षोः एकं भिक्षापात्रम् अस्ति। | भिक्षोरेकं भिक्षापात्रम् अस्ति। |
| अस्य पशोः दंष्ट्राः तीक्ष्णाः सन्ति। | अस्य पशोर् दंष्ट्राः तीक्ष्णाः सन्ति। |
| नौः अगाधस्य जलस्य तरणे साधनम् अस्ति। | नौरगाधस्य जलस्य तरणे साधनम् अस्ति। |
| गौः आगच्छति। | गौरागच्छति। |
| नौः इतः आयाति। | नौरितः आयाति। |
| नौः उदके गच्छति। | नौरुदके गच्छति। |
| नौः काष्ठेन कृता भवति। | नौः काष्ठेन कृता भवति। |
| गौः कौण्डकं खादति। | गौः कौण्डकं खादति। |
| गौः घासं खादति। | गौर् घासं खादति। |
| का चन नौः छदिषा युक्ता भवति। | का चन नौश् छदिषा युक्ता भवति। |
| नौः झञ्झावातेन विपर्यस्यते। | नौर् झञ्झावातेन विपर्यस्यते। |

| | |
|---|---|
| **नौः पानीये गच्छति।** | **नौः पानीये गच्छति।** |
| **नौः रम्या अस्ति।** | **नौ रम्या अस्ति।** |
| **नौः स्थले न गच्छति।** | **नौः स्थले न गच्छति।**<br>**नौस् स्थले न गच्छति।** |
| **गौः हम्भां कुरुते।** | **गौर् हम्भां कुरुते।** |

**ह्रस्वात् अवर्णात्** परात् विसर्गात् ह्रस्वे अकारे परे पूर्वस्य अकारस्य, विसर्गस्य, परस्य अकारस्य च स्थाने ओकारो भवति, अन्येषु स्वरेषु परेषु विसर्गस्य लोपो भवति, क-ख-प-फ-श-ष-सेषु परेषु विसर्गस्य विसर्ग एव भवति, च-छयोः परयोः शकारो भवति, ट-ठयोः परयोः षकारो भवति, त-थयोः परयोः सकारो भवति, अन्येषु व्यञ्जनेषु परेषु विसर्गस्य तत्पूर्वस्य अकारस्य च स्थाने ओकारो भवति, **"पुनः"** इत्यादिकानामव्ययानां विसर्गस्य तु स्वरेषु परेषु गकारादिषु परेषु च रेफो भवति, रेफे परे लोपो भवति; **सः एषः** इत्यनयोर् विसर्गयोस्तु ह्रस्वेऽकारे परे पूर्वस्याऽकारस्य विसर्गस्य परस्याऽकारस्य च ओकारो भवति, अन्येषु स्वरेषु ककारादिषु सर्वेष्वेव व्यञ्जनेषु च परेषु लोपो भवति; **दीर्घात् अवर्णात्** (आकारात्) परस्य विसर्गस्य क-ख-प-फ-श-ष-सेषु परेषु विसर्ग एव भवति, च-छयोः परयोः शकारो भवति, ट-ठयोः परयोः षकारो भवति, त-थयोः परयोः सकारो भवति, अन्येषु वर्णेषु परेषु लोपो भवति; **इकारादिभ्यः स्वरेभ्यः** परस्य विसर्गस्य क-ख-प-फ-श-ष-सेषु परेषु विसर्ग एव भवति, च-छयोः परयोः शकारो भवति, ट-ठयोः परयोः षकारो भवति, त-थयोः परयोः सकारो भवति, रेफभिन्नेषु अन्येषु वर्णेषु परेषु रेफो भवति, रेफे परे लोपो भवति, रेफे परे लुप्ताद् विसर्गात् पूर्वस्य अकारस्य इकारस्य उकारस्य वाऽपि दीर्घो भवति; **सर्वेषां विसर्गाणां** शकारे परे शकारः, षकारे परे षकारः, सकारे परे सकारोऽपि विकल्पेन भवति।

### श्चुत्वसन्धिः

| | |
|---|---|
| **तत् शीघ्रं गच्छति।** | **तच् शीघ्रं गच्छति।** |
| **सत् चित्तं धर्माय मोक्षाय च भवति।** | **सच् चित्तं धर्माय मोक्षाय च भवति।** |
| **शूरः शत्रून् जयति।** | **शूरः शत्रूञ् जयति।** |

तालव्यशकारेण चवर्गीयवर्णैश्च योगे तवर्गीयवर्णानां स्थाने चवर्गीयवर्णाः भवन्ति।

### ष्टुत्वसन्धिः

| | |
|---|---|
| **तत् टीकायाम् उक्तम् अस्ति।** | **तट् टीकायाम् उक्तम् अस्ति।** |
| **विद्यार्थिन् डमरुं वादयस्व।** | **विद्यार्थिण् डमरुं वादयस्व।** |

टवर्गीयवर्णैः सह योगे तवर्गीयवर्णानां स्थाने टवर्गीयवर्णाः भवन्ति।

## पञ्चमः पाठः

## तृतीयायाः विभक्तेः प्रयोगाः

**छात्रः कलमेन लिखति। शिक्षकः खटिकया लिखति। पथिकः अञ्जलिना जलं पिबति। पशुः पशुना सह चरति। सौचिकः सूच्या वस्त्रं सीव्यति।**

रथी रथिना युध्यते।

रथिनौ रथिभ्यां युध्येते।

रथिनः रथिभिः युध्यन्ते।

**हस्त्यारोहौ रथिभ्यां न युध्येते। अभिमन्युः रथिभिः युयुधे। धनिनः हस्तिना संचरन्ते। राजानः हस्तिभिः नदीं तरन्ति स्म। आचार्यः ब्रह्मचारिणा सह गच्छति। आचार्यः ब्रह्मचारिभ्यां सह संलपति। आचार्यः ब्रह्मचारिभिः सह निवसति। गुरुः विद्यार्थिना सह गच्छति। गुरुः विद्यार्थिभ्यां सह संलपति। गुरुः विद्यार्थिभिः सह न निवसति। धनिनः पक्षिणा मनोरञ्जनं कुर्वन्ति। कृषकाः पशुपक्षिभ्यां जीवन्ति। पक्षी पक्षिभिः सह उड्डयते। यानचालकः प्रहरिणा सह संलपति। धर्मशालाः तीर्थयात्रिभिः पूर्णाः सन्ति। गृहस्थः सन्यासिना सह न चरति। त्वं मेधाविना छात्रेण सह सङ्गतं कुरुष्व। भगिनी भ्रात्रा सह खेलति। अग्रजः भ्रातृभ्यां सह संलपति। अग्रजौ भ्रातृभिः सह गच्छतः। पुत्रः पित्रा सह गच्छति। पुत्री मात्रा सह उपविशति। नेता कार्यकर्त्रा सह संलपति। पितामही नप्त्रा सह संलपति। पितामही नप्तृभिः सह उपविशति। नेता कार्यकर्तृभिः सह गच्छति। मार्गणः दात्रा सह विवादं न कुरुते। मार्गणः दातृभिः दत्तेन जीवति।**

शाठ्येन मित्रं कपटेन धर्मं परोपतापेन समृद्धभावम्।
सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये नूनमपण्डितास् ते॥

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि--

| | | | |
|---|---|---|---|
| अग्रजः | मात्रा | सह | संलपति |
| पुत्रः | भ्राता | | हिण्डते |
| पुत्री | भ्रातृभ्याम् | | पठति |
| विद्यार्थी | भ्रातृभिः | | उपविशति |
| | विद्यार्थिना | | गच्छति |
| | विद्यार्थिभ्याम् | | अधीते |
| | विद्यार्थिभिः | | |
| | मेधाविना मित्रेण | | |

| | | | |
|---|---|---|---|
| रथी | रथिना | सह | युध्यते |
| रथिनौ | रथिभ्याम् | | युध्येते |
| रथिनः | रथिभिः | | युध्यन्ते |
| नेता | कार्यकर्त्रा | | सम्मन्त्रयते |
| नेतारौ | कार्यकर्तृभ्याम् | | सम्मन्त्रयेते |
| नेतारः | कार्यकर्तृभिः | | सम्मन्त्रयन्ते |

**नमो वागीश्वराय। नमो नारायणाय। नमः शिवाय। सरस्वत्यै नमः। लक्ष्म्यै नमः। पार्वत्यै नमः। गणेशाय नमः। गुरवे नमः। अग्नये स्वाहा। इन्द्राय स्वाहा। पितृभ्यः स्वधा।**

**बालकः पक्षिणे पानीयं ददाति। बालकः पक्षिभ्यां धान्यं ददाति। बालकः पक्षिभ्यः फलं ददाति।**

**ऋणी धनिने उपहारं ददाति। धनी ऋणिभ्यां रूप्यकाणि ददाति। त्वं धनिभ्यः किं ददासि? हस्तिपकः हस्तिने पिप्पलशाखाः ददाति। गृहस्वामी पञ्जरस्थाय पक्षिणे तण्डुलान् ददाति। सः पञ्जरस्थाभ्यां पक्षिभ्यां पानीयं ददाति। धार्मिकाः पक्षिभ्यः अन्नं ददति। गुरुः चपलाय विद्यार्थिने वाग्दण्डं ददाति। शिक्षिका सुशीलाभ्यां विद्यार्थिभ्यां पारितोषिकं ददाति। धार्मिकः श्रेष्ठी सुशीलेभ्यः विद्यार्थिभ्यः वृत्तिं ददाति। पीडितः जनः प्रहरिणे आवेदनपत्रं ददाति। साधवः मनुष्याः प्रहरिभ्यः साहाय्यं ददति। मन्त्री कर्मचारिणे पारितोषिकं ददाति। राजा कर्मचारिभ्यां पारितोषिकं ददाति। त्वं कर्मचारिभ्यः किं ददासि? लोकः सन्न्यासिने भिक्षां ददातु। गृहस्थवानप्रस्थौ सन्न्यासिभ्यां भिक्षां दत्ताम्। ज्ञानिनः गृहस्थाः सन्न्यासिभ्यः ज्ञानं ददतु। याचकाः दात्रे आशिषं ददति। त्वं दातृभ्यां किं ददासि? वयं दातृभ्यः धन्यवादं दद्मः। अग्रजः भ्रात्रे कलमं ददाति। युवां भ्रातृभ्यां किं दत्थः? अहं भ्रातृभ्यः पुस्तकं ददामि। प्रधानाध्यापकः कुशलेभ्यः वक्तृभ्यः पारितोषिकं ददाति। पितामही नप्त्रे भक्तं ददाति। पितामही नप्तृभ्यां दुग्धं ददाति। पितामही नप्तृभ्यः किंकिं ददाति?**

वरुणादिसुरार्च्याय तरुणादित्यवर्चसे।
अरुणाचलनाथाय करुणामूर्तये नमः।।

अधोलिखितानि पदानि यथौचिति प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | | | |
|---|---|---|---|---|
| प्रधानाध्यापकः<br>प्रधानाध्यापिका<br>अकुशला वक्त्री<br>अमेधावी विद्यार्थी<br>अमेधाविनी विद्यार्थिनी | मेधाविने<br>मेधाविभ्याम्<br>कुशलाय<br>कुशलायै<br>मेधाविन्यै | विद्यार्थिने<br>विद्यार्थिभ्याम्<br>वक्त्रे<br>विद्यार्थिन्यै<br>वक्त्र्यै | सदा<br>पारितोषिकम् | ददाति<br>ईर्ष्यति<br>असूयति<br>कुप्यति |

सुशीलो भव धर्मात्मा मैत्रः प्राणिहिते रतः।
निम्नं यथाऽऽपः प्रवणास् त्वामायास्यन्ति सम्पदः॥

धनप्रयोगकार्येषु तथा विद्यागमेषु च।
आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत्॥

इदमेव हि पाण्डित्यमयमेव परो नयः।
इदं हि बुद्धिमत्त्वं यत् त्वायादल्पतरो व्ययः॥

जलबिन्दुनिपातैश् च क्रमशः पूर्यते घटः।
तथा पूर्तिर् हि विद्यानां धर्मस्य च धनस्य च॥

क्षणशः कणशश् चैव विद्यामर्थं च साधयेत्।
क्षणत्यागे कुतो विद्या कणत्यागे कुतो धनम्॥

शनैः पन्थाः शनैः कन्था शनैः पर्वतलङ्घनम्।
शनैर् विद्या शनैर् वित्तं पञ्चैतानि शनैःशनैः॥

अन्यायोपार्जितं वित्तं दश वर्षाणि तिष्ठति।
प्राप्ते त्वेकादशे वर्षे समूलं तु विनश्यति॥

अतिक्लेशेन येऽर्थास् स्युर् धर्मस्याऽतिक्रमेण वा।
अरेर् वा प्रणिपातेन मा स्म तेषु मनः कृथाः॥

अजरामरवत् प्राज्ञो विद्यामर्थञ् च चिन्तयेत्।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत्॥

सुखं दुःखान्तमालस्यं दाक्ष्यं दुःखं सुखोदयम्।
श्रीर् विभूतिर् धृतिः कीर्तिर् दक्षे तिष्ठन्ति नाऽलसे॥

योजनानां सहस्राणि याति गच्छन् पिपीलकः।
अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति॥

अद्वैधमनसं युक्तं शूरं धीरं विपश्चितम्।
न सन्त्यजति श्रीः कान्तिरादित्यमिव कर्हिचित्॥

भयभीतश् चाऽलसश् च तथा चाऽशुचिरेव यः।
तेन किं नाम संसाध्यं भूमिस् तं ग्रसते नरम्॥

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता॥

अव्यापारः परार्थेषु नित्योद्योगः स्वकर्मसु।
रक्षणं समुपात्तानामेतद् वैभवलक्षणम्॥

(स्मृतिपुराणनीतिशास्त्रादिग्रन्थेभ्यः)

## गुणसन्धिः

| असंहितायाम् | संहितायाम् |
|---|---|
| मम इदं कलमम् अस्ति। | ममेदं कलमम् अस्ति। |
| तव इयं भगिनी अस्ति। | तवेयं भगिनी अस्ति। |
| तव इक्षवः सन्ति। | तवेक्षवः सन्ति। |
| मम इक्षवः सन्ति। | ममेक्षवः सन्ति। |
| माता शीघ्रम् आगच्छ इति भणति। | माता शीघ्रम् आगच्छेति भणति। |
| माता पानीयं पिब इति ब्रवीति। | माता पानीयं पिबेति ब्रवीति। |
| मम ईश्वरे भक्तिः अस्ति। | ममेश्वरे भक्तिः अस्ति। |
| तव ईक्षणे रुचिः अस्ति। | तवेक्षणे रुचिः अस्ति। |
| तव उक्षाणः सन्ति। | तवोक्षाणः सन्ति। |
| तस्य उक्षाणः सन्ति। | तस्योक्षाणः सन्ति। |
| एते कस्य उक्षाणः सन्ति? | एते कस्योक्षाणः सन्ति? |
| पामरेण उक्तं कः अपि न शृणोति। | पामरेणोक्तं कः अपि न शृणोति। |
| त्वं कुत्र उपविशसि? | त्वं कुत्रोपविशसि? |
| पक्षी पक्षिणा सह उड्डयते। | पक्षी पक्षिणा सहोड्डयते। |
| अग्रजः भ्रात्रा सह उपविशति। | अग्रजः भ्रात्रा सहोपविशति। |
| तव ऊर्णापिण्डाः सन्ति। | तवोर्णापिण्डाः सन्ति। |
| बालिका इदानीं शेते। | बालिकेदानीं शेते। |
| पिता उक्षाणं विलोकय इति भणति। | पितोक्षाणं विलोकयेति भणति। |
| अत्र भ्राता उपविशति। | अत्र भ्रातोपविशति। |
| अत्र माता उपविशति। | अत्र मातोपविशति। |
| ब्रह्मा उवाच। | ब्रह्मोवाच। |
| मात्रा उक्तं श्रवणीयम्। | मात्रोक्तं श्रवणीयम्। |
| पित्रा उक्तं स्मरणीयम्। | पित्रोक्तं स्मरणीयम्। |
| ज्येष्ठभ्रात्रा उक्तम् अपि मननीयम्। | ज्येष्ठभ्रात्रोक्तम् अपि मननीयम्। |
| गुरुणा उक्तं सर्वे शृण्वन्ति। | गुरुणोक्तं सर्वे शृण्वन्ति। |
| माता ऊर्णापिण्डं क्रीणीष्व इति भणति। | मातोर्णापिण्डं क्रीणीष्वेति भणति। |
| पिता ऋक्षं नैव छुप इति भणति। | पितर्क्षं नैव छुपेति भणति। |
| पिता ऋकारम् उच्चारय इति भणति। | पितर्कारम् उच्चारयेति भणति। |
| पिता ऌकारं सुष्ठु उच्चारय इति भणति। | पितल्कारं सुष्ठु उच्चारयेति भणति। |

अकाराद् आकाराद् वा इवर्णे परे पूर्वपरयोः स्थाने एकारो भवति, उवर्णे परे पूर्वपरयोः स्थाने ओकारो भवति, ऋवर्णे परे पूर्वपरयोः स्थाने अर् भवति, ऌवर्णे परे पूर्वपरयोः स्थाने अल् भवति।

**देवदत्तः गृहात् आगच्छति। बालिका धारायाः आगच्छति। भगिनी विद्यालयात् आगच्छति। बालकः मधुकर्याः बिभेति। वन्याः पशवः अग्नेः बिभ्यति। त्वं वन्यात् पशोः बिभेषि ?**

**चौरः प्रहरिणः बिभेति। साधुः प्रहरिभ्यां न बिभेति। सज्जनः प्रहरिभ्यः न बिभेति।**

**शशः विद्यार्थिनः बिभेति। व्याघ्रः विद्यार्थिभ्यां न बिभेति। मयूराः विद्यार्थिभ्यः बिभ्यति। पदातिः रथिनः बिभेति। शूरः हस्त्यारोहः कातराभ्यां रथिभ्यां न बिभेति। महारथः बहुभ्यः रथिभ्यः अपि न बिभेति। मृगः मृगहन्तुः बिभेति। नकुलः मार्गे गन्तृभ्यां मम भ्रातृभ्यां बिभेति। मृगी प्रहर्तृभ्यः वेद्धृभ्यः बिभेति। राजा हस्तिनः अवरोहति। मन्त्रिणौ हस्तिभ्याम् अवरोहतः। सेनानायकाः हस्तिभ्यः अवरोहन्ति। मन्दः विद्यार्थी मेधाविनः विद्यार्थिनः पराजयते। रामः मेधाविभ्यां विद्यार्थिभ्यां पराजेष्ट। यूयं मेधाविभ्यः अपि विद्यार्थिभ्यः न पराजयेध्वम्। याचकः दातुः धनं प्राप्नोति। त्वम् एताभ्यां दातृभ्यां किं प्रापः ? मार्गणाः अमीभ्यः दातृभ्यः वस्त्राणि प्रापन्।**

विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्।
नीचादपि शुभं ज्ञानं स्त्रीरत्नं दुष्कुलादपि॥

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | |
|---|---|---|
| शशः | प्रहरिणः | |
| मयूराः | प्रहरिभ्याम् | |
| बिडालः | प्रहरिभ्यः | |
| कुक्कुरः | प्रहरिण्याः | |
| चटाः | प्रहरिणीभ्यः | बिभेति |
| चौरः | भ्रातुः | न बिभेति |
| व्याघ्रः | भ्रातृभ्याम् | बिभ्यति |
| सिंहः | भ्रातृभ्यः | न बिभ्यति |
| मृगी | हस्तिनः | |
| नकुलः | हस्तिभ्यः | |
| सज्जनाः | हस्तिन्याः | |
| साधुः | हस्तिनीभ्याम् | |

**मम पुस्तकम् अस्ति। तव कलमम् अस्ति। बालकस्य पुस्तकमस्ति। बालिकायाः माता अस्ति। मुनेः कुटी अस्ति। कुक्कुट्याः शावकाः सन्ति। गुरोः गृहम् अस्ति।**

**हस्तिनः शुण्डा भवति। अनयोः हस्तिनोः स्वामी कः अस्ति? हस्तिनां समूहः गच्छति।**

**विद्यार्थिनः कलमम् अस्ति। एतयोः विद्यार्थिनोः परस्परं प्रेम अस्ति। शिक्षकाः विद्यार्थिनां मार्गदर्शकाः भवन्ति। प्रहरिणः स्तूपिका अस्ति। प्रहरिणां नायकः भवति। अस्य पक्षिणः पक्षौ सुन्दरौ स्तः। पक्षिणां समूहः आकाशे उड्डयते। मन्त्रिणः यानम् अस्ति। रथिनः रथः अस्ति। भ्रातुः पुस्तिका अस्ति। भ्रात्रोः एकमेव पुस्तकम् अस्ति। भ्रातॄणां झोलिकाः सन्ति। पुत्रः पितुः सेवां कुरुते। पुत्री मातुः आज्ञां पालयति।**

जवो हि सप्तेः प्रथमं विभूषणं त्रपाऽङ्गनानां कृशता तपस्विनाम्।
श्रुतं द्विजानां धनिनामगर्वता पराक्रमः शस्त्रबलोपजीविनाम्॥

अधोलिखितानि पदानि यथौचिति प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | |
|---|---|---|
| विद्यार्थिनः | पुच्छम् | |
| विद्यार्थिनोः | दण्डः | |
| विद्यार्थिनाम् | पुस्तकानि | |
| विद्यार्थिन्याः | कलमम् | अस्ति |
| विद्यार्थिन्योः | झोलिका | स्तः |
| विद्यार्थिनीनाम् | पुस्तिकाः | सन्ति |
| अस्माकं पितुः | शुण्डा | भवति |
| मम भ्रातुः | दन्तौ | भवतः |
| मम भ्रात्रोः | क्रीडनकानि | न भवतः |
| मम भ्रातॄणाम् | अस्त्रम् | भवन्ति |
| हस्तिनः | वेत्रफलकः | |
| हस्तिन्याः | स्तूपिका | |
| प्रहरिणः | कर्णौ | |
| प्रहरिणाम् | पुस्तके | |

भर्त्रा तुष्यति यत्र स्त्री स्त्रिया भर्ता च तुष्यति।
तत्र वेश्मनि कल्याणं सम्पद्येत पदेपदे॥

यत्र भर्ता च भार्या च परस्परमनुव्रतौ।
तत्र धर्माऽर्थकामानां त्रयाणामपि सङ्गतम्॥

स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम्।
रक्तमेकं विरक्तं तु तस्मात् कष्टतरं नु किम्॥

यानि कान्यत्र सौख्यानि भोगस्थानानि यानि च।
धर्मार्थकामजातानि तानि स्त्रीभ्यो भवन्ति हि॥

श्रिय एताः स्त्रियो नाम सत्कार्या भूतिमिच्छता।
लालिता निगृहीता च स्त्री श्रीर् भवति नाऽन्यथा॥

दृष्टाऽदृष्टफलार्थं हि भार्या पुत्रो धनं गृहम्।
सर्वमेतद् विधातव्यं बुधानामेष निश्चयः॥

पुत्रपौत्रवधूभृत्यैः सङ्कीर्णमपि सर्वतः।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत्॥

वृक्षमूलेऽपि दयिता यत्र तिष्ठति तद् गृहम्।
प्रासादोऽपि तया हीनः कान्तार इति निश्चितम्॥

निर्विरोधसुखं लोके को वा त्यजति दुर्लभम्।
योऽविरोधसुखत्यागी स पशुर् नाऽत्र संशयः॥

तृणानामिव हि व्यर्थं नृणां जन्म सुखद्विषाम्।
दोषास् तु परिहर्तव्या इत्याचार्यैः स्थिरीकृतम्॥

यत् सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते।
कामं तदुपसेवेत न मूढव्रतमाचरेत्॥

प्रीणनं लालनं पोषं रञ्जनं मार्दवं दयाम्।
कृत्वोपगच्छेत् स्ववधूं युवतीं प्रेमवान् पतिः॥

अप्रीतां रोगिणीं नारीमन्तर्वत्नीं धृतव्रताम्।
रजस्वलामकामां च कामयेत न कर्हिचित्॥

उद्यतस्य हि कामस्य प्रतिवादो न शस्यते।
अपि निर्मुक्तसङ्गस्य कामरक्तस्य किं पुनः॥

कामः सर्वात्मना हेयः स चेद् हातुं न शक्यते।
स्वभार्यां प्रति कर्तव्यः सैव तस्य तु भेषजम्॥

(नानास्मृतिपुराणेतिहाससुभाषितग्रन्थेभ्यः)

## वृद्धिसन्धिः

| असंहितायाम् | संहितायाम् |
|---|---|
| मम एकं कलमम् अस्ति। | ममैकं कलमम् अस्ति। |
| तव एका भगिनी अस्ति। | तवैका भगिनी अस्ति। |
| मम एकः भ्राता अस्ति। | ममैकः भ्राता अस्ति। |
| तव एकः कन्दुकः अस्ति। | तवैकः कन्दुकः अस्ति। |
| बालिका एकदा हस्तिनम् अद्राक्षीत्। | बालिकैकदा हस्तिनम् अद्राक्षीत्। |
| बालिका एकला क्व अपि न गच्छेत्। | बालिकैकला क्व अपि न गच्छेत्। |
| मम पिता अधुना एव गृहम् अगमत्। | मम पिता अधुनैव गृहम् अगमत्। |
| इन्द्रस्य ऐरावतः हस्ती अस्ति। | इन्द्रस्यैरावतः हस्ती अस्ति। |
| तव ऐच्छिकः विषयः कः अस्ति ? | तवैच्छिकः विषयः कः अस्ति ? |
| तव ऐश्वर्यं स्थिरं भवतु। | तवैश्वर्यं स्थिरं भवतु। |
| नीत्या ऐश्वर्यं चिरस्थायि भवति। | नीत्यैश्वर्यं चिरस्थायि भवति। |
| बालक ओदनं खाद। | बालकौदनं खाद। |
| अद्य ओदनः मिष्टः न अभूत्। | अद्यौदनः मिष्टः न अभूत्। |
| तव ओदनम् अन्यः अखादीत्। | तवौदनम् अन्यः अखादीत्। |
| तव ओष्ठौ सुन्दरौ स्तः। | तवौष्ठौ सुन्दरौ स्तः। |
| वनस्य ओषधयः संरक्षणीयाः। | वनस्यौषधयः संरक्षणीयाः। |
| माता ओदनं ददाति। | मातौदनं ददाति। |
| भ्राता ओदनं खादति। | भ्रातौदनं खादति। |
| वैद्यस्य औषधं पिब। | वैद्यस्यौषधं पिब। |
| तव औषधम् अहम् आनेष्यामि। | तवौषधम् अहम् आनेष्यामि। |
| पिता औषधम् आनैषीत्। | पितौषधम् आनैषीत्। |
| भ्राता औषधम् अदात्। | भ्रातौषधम् अदात्। |
| माता औषधम् अपात्। | मातौषधम् अपात्। |

**अकाराद् आकाराद्** वा एकारे ऐकारे वा परे पूर्वपरयोः स्थाने ऐकारो भवति, ओकारे औकारे वा परे पूर्वपरयोः स्थाने औकारो भवति।

**माता पुत्रे स्नेहं कुरुते। माता बालिकायां स्नेहं कुरुते। पिता पुत्र्यां स्नेहं कुरुते। मत्स्याः नद्यां खेलन्ति। हंसाः पुष्करिण्यां खेलन्ति। गृध्राः मृते पशौ निपतन्ति। पुत्तलिका अग्नौ पतति।**

**अग्रजाः कनिष्ठे भ्रातरि स्नेहं कुर्वन्ति।**

**ज्येष्ठाः भगिन्यः कनिष्ठेषु भ्रातृषु स्नेहं कुर्वन्ति।**

**अनयोः विद्यार्थिनोः अयं विद्यार्थी साधुः अस्ति। धनिनः हस्तिनि इच्छां कुर्वन्ति। शिक्षकाः विद्यार्थिषु विद्यार्थिनीषु च स्नेहं कुर्वन्ति। जनाः प्रहरिणि विश्वसन्ति। जनाः पक्षिषु दयां कुर्वन्ति। पुत्राः पितरि श्रद्धां कुर्वन्ति। मार्गणाः दातरि आस्थां कुर्वन्ति। अयं दाता सर्वेषु दातृषु उत्तमः वर्तते। मातरि सुप्तायां भगिनी शेते। शिक्षके आगते छात्राः उत्तिष्ठन्ति। भागिनेययोः बहिर्गतयोः मातुलः आयासीत्। मयि बहिर्गते मम भ्राता मम पुस्तकं पपाठ।**

परनिन्दासु पाण्डित्यं स्वेषु कार्येष्वनुद्यमः।<br>
प्रद्वेषश् च गुणज्ञेषु पन्थानो ह्यापदां त्रयः॥

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | |
|---|---|---|
| | पुत्रे | |
| गुरवः | विद्यार्थिनि | |
| पुत्राः | विद्यार्थिनोः | |
| शिक्षिका | विद्यार्थिषु | स्नेहं कुर्वाते |
| आचार्यः | विद्यार्थिन्याम् | स्नेहं कुरुते |
| गुरुः | विद्यार्थिन्योः | स्नेहं कुर्वते |
| अग्रजः | विद्यार्थिनीषु | श्रद्धां कुरुते |
| भगिनी | ब्रह्मचारिणि | श्रद्धां कुर्वते |
| पुत्री | ब्रह्मचारिण्याम् | विश्वासं कुरुते |
| पुत्रः | भ्रातरि | विश्वासं कुर्वते |
| जनाः | भ्रात्रोः | दयां कुर्वन्ति |
| माता | भ्रातृषु | |
| पिता | पितरि | |
| मातापितरौ | मातरि | |
| | धनिनि मित्रे | |

**बालक, इतः आगच्छ। बालिके, पाठं पठ। अग्ने, अस्मान् रक्ष। कवे, एकं स्वरचितं श्लोकं श्रावय। भगिनि, पुस्तकम् आनय। गुरो, मम अभ्यासपुस्तिकां देहि।**

**भोः धनिन्, भिक्षुकाय भिक्षां देहि।**

**भोः धनिनः, दरिद्रेभ्यः धनं दत्त।**

**भोः धनिनौ, दरिद्रेभ्यः वस्त्राणि दत्तम्। हे विद्यार्थिन्, इतः आगच्छ। हे विद्यार्थिनौ, पाठं पठतम्। हे विद्यार्थिनः, परिश्रमिणः भवत। हे प्रहरिन्, ग्रन्थिच्छेदकं निगृह्णीष्व। भोः प्रहरिणौ, चौरं दण्डयतम्। भोः प्रहरिणः, दस्यून् दमयत। हे प्रहरिणि, द्वारे तिष्ठ। हे प्रहरिण्यौ, मार्गे तिष्ठतम्। भोः प्रहरिण्यः, आदेशं पालयत। भोः ब्रह्मचारिन्, वेदं पठ। भोः ब्रह्मचारिणौ, समिधः आनयतम्। भोः ब्रह्मचारिणः, सन्ध्योपासनं कुरुध्वम्। भोः तीर्थयात्रिणः, धर्मशालायां निवसत। हे धनि मित्र, मह्यम् ऋणं देहि। हे धनिनी मित्रे, मह्यं सामकम् ऋणं दत्तम्। हे धनीनि मित्राणि, दरिद्रेभ्यः धनं दत्त। हे कार्यकर्तः, कार्यं सम्यक् कुरु। हे दातः, त्वं पुण्यं प्राप्नुहि। हे दातारः, सुपात्राय धनं दत्त। हे भ्रातः, अङ्गने खेल। हे भ्रातरौ, विद्यालयं गच्छतम्। हे भ्रातरः, सम्यक् पठत।**

दुष्टनिर्दलन देव दयालो पद्मनाभ धरणीधर धर्मिन्।
रावणान्तक रमेश मुरारे श्रीपते शमय दुःखमशेषम्॥

अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | | | | |
|---|---|---|---|---|---|
| भोः<br>हे<br>हे<br>ए<br>अङ्ग<br>अयि | विद्यार्थिन्<br>विद्यार्थिनः<br>विद्यार्थिनि<br>विद्यार्थिन्यः<br>ब्रह्मचारिणौ<br>ब्रह्मचारिणः<br>भ्रातः<br>भ्रातरौ<br>भगिनि<br>कवे<br>गुरो | त्वम् अपि<br>युवाम् अपि<br>यूयम् अपि<br>भवान् अपि | सावधानः<br>सावधानौ<br>सावधानाः<br>सावधाना | भूत्वा | खेल<br>खेलतम्<br>खेलत<br>पठ<br>पठतम्<br>पठत<br>पाठयतु<br>पठतु<br>लिख<br>व्यवहर<br>कथय |

अकिञ्चनस्य दान्तस्य शान्तस्य समचेतसः।
आत्मसन्तुष्टमनसः सर्वा हि सुखदा दिशः॥

सन्तुष्टस्य निरीहस्य स्वात्मारामस्य यत् सुखम्।
कुतस् तत् कामलोभेन धावतोऽर्थेहया दिशः॥

अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः।
अतृप्ता यान्ति विध्वंसं सन्तोषं यान्ति पण्डिताः॥

अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः।
आरोग्यं प्रियसंवासो गृध्येत् तत्र न पण्डितः॥

या दुस्त्यजा दुर्मतिभिर् या न जीर्यति जीर्यतः।
तां तृष्णां सन्त्यजन् प्राज्ञः सुखेन स्वेन पूर्यते॥

कामानभिलषन् मोहान् न नरः सुखमेधते।
श्येनालयतरुच्छायां व्रजन्निव कपिञ्जलः॥

यद्यत् प्रीतिकरं पुंसां वस्तु लोके प्रजायते।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति॥

नाभिनन्देत मरणं नाभिनन्देत जीवितम्।
कालमेव प्रतीक्षेत न्याय्यचेष्टापरायणः॥

कामो लोभो रसास्वादः स्नेहो मानस् तथा च रुट्।
एते त्याज्याः प्रयत्नेन षड् दोषाः संसृतिप्रदाः॥

यथा सर्वरसैस् तृप्तो नाऽभिनन्दति किञ्चन।
तथा प्रज्ञानतृप्तस्य नित्यतृप्तिः सुखोदया॥

अकृत्रिममसंहार्यं प्राकृतं निरुपस्कृतम्।
अध्यात्मं सुकृतं प्राप्तः सुखमव्ययमश्नुते॥

यदा संहरते कामान् कूर्मोऽङ्गानीव सर्वशः।
तदाऽऽत्मज्योतिरचिरात् स्वात्मन्येव प्रसीदति॥

स्वानुभूतेश् च शास्त्रस्य गुरोश् चैवैकवाक्यता।
यस्याऽभ्यासेन तेनाऽऽत्मा सततं चाऽवलोक्यते।

सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम्।
यस् तारयति नाऽऽत्मानं तस्मात् पापतरोऽत्र कः॥

(स्मृतिपुराणमहाभारतादिभ्यः)

## यण्सन्धिः

| असंहितायाम् | संहितायाम् |
|---|---|
| तत्र दधि अस्ति। | तत्र दध्यस्ति। |
| हरिः दधि अखादीत्। | हरिः दध्यखादीत्। |
| अद्य कक्षायां विद्यार्थिनः कति अनुपस्थिताः? | अद्य कक्षायां विद्यार्थिनः कत्यनुपस्थिताः? |
| त्वं झटिति दधि आनय। | त्वं झटिति दध्यानय। |
| अद्य कर्मकराः कति आगच्छन्ति? | अद्य कर्मकराः कत्यागच्छन्ति? |
| अद्य कर्मकराः कति आगमन्? | अद्य कर्मकराः कत्यागमन्? |
| लक्ष्मीः दधि उपभुङ्क्ते। | लक्ष्मीः दध्युपभुङ्क्ते। |
| अद्य कक्षायां विद्यार्थिनः कति उपस्थिताः? | अद्यकक्षायां विद्यार्थिनः कत्युपस्थिताः? |
| त्वम् अपि ऊर्णां क्रीणीष्व। | त्वम् अप्यूर्णां क्रीणीष्व। |
| अत्र कति एडकाः चरन्ति? | अत्र कत्येडकाः चरन्ति? |
| हस्ती अगमत्। | हस्त्यगमत्। |
| हस्ती आगमत्। | हस्त्यागमत्। |
| हस्ती उत्तिष्ठति। | हस्त्युत्तिष्ठति। |
| इन्द्रस्य हस्ती ऐरावतः उच्यते। | इन्द्रस्य हस्त्यैरावतः उच्यते। |
| मधु अस्ति न वा? | मध्वस्ति न वा? |
| कृषकाः बहु अन्नम् उत्पादयन्ति। | कृषकाः बह्वन्नम् उत्पादयन्ति। |
| गगनं विभु अस्ति। | गगनं विभ्वस्ति। |
| त्वं तत्र किन्नु अगमः? | त्वं तत्र किन्न्वगमः? |
| एतत् ऊर्णापिण्डं लघु अस्ति। | एतत् ऊर्णापिण्डं लघ्वस्ति। |
| अदः ऊर्णापिण्डं गुरु अस्ति। | अदः ऊर्णापिण्डं गुर्वस्ति। |
| एतत् कुलं भीरु अस्ति। | एतत् कुलं भीर्वस्ति। |
| मृदु अङ्गं स्वल्पेन आघातेन अपि क्षतं भवति। | मृद्वङ्गं स्वल्पेन आघातेन अपि क्षतं भवति। |
| सद्योजातस्य शिशोः तालु अवनतं भवति। | सद्योजातस्य शिशोः ताल्ववनतं भवति। |
| मधु आनीय खाद। | मध्वानीय खाद। |
| बालकः सुन्दरं वस्तु इच्छति। | बालकः सुन्दरं वस्त्विच्छति। |

| | |
|---|---|
| **मृदु ओदनं रुच्यं भवति।** | **मृद्वोदनं रुच्यं भवति।** |
| **स्वादु औषधं शिशुः अपि लेढि।** | **स्वाद्वौषधं शिशुः अपि लेढि।** |
| **मम मित्रं दातृ अस्ति।** | **मम मित्रं दात्रस्ति।** |

> अकारादिषु स्वभिन्नेषु स्वरेषु परेषु इवर्णस्य यकारादेशो भवति, उवर्णस्य वकारादेशो भवति, ऋवर्णस्य रेफादेशो भवति।

### अयादिसन्धिः

| | |
|---|---|
| **सर्वे आगच्छन्तु।** | **सर्वयागच्छन्तु।** |
| | **सर्व आगच्छन्तु।** |
| **के इमे आगच्छन्ति?** | **कयिमयागच्छन्ति?** |
| | **क इम आगच्छन्ति?** |
| **कवे इह आगच्छ।** | **कवयिह आगच्छ।** |
| | **कव इह आगच्छ।** |
| **साधो इदं शृणु।** | **साधविदं शृणु।** |
| | **साध इदं शृणु।** |
| **गुरो इदं स्फुटं क्रियताम्।** | **गुरविदं स्फुटं क्रियताम्।** |
| | **गुर इदं स्फुटं क्रियताम्।** |
| **विष्णो इह आगच्छ।** | **विष्णविह आगच्छ।** |
| | **विष्ण इह आगच्छ।** |
| **सर्वे वयं सुखं लभामहै इति इच्छन्ति।** | **सर्वे वयं सुखं लभामहायिति इच्छन्ति।** |
| | **सर्वे वयं सुखं लभामहा इति इच्छन्ति।** |
| **सर्वः जनः अहं सुकार्यं करवै इति इच्छति।** | **सर्वः जनः अहं सुकार्यं करवायिति इच्छति।** |
| | **सर्वः जनः अहं सुकार्यं करवा इति इच्छति।** |
| **बालकौ आगच्छतः।** | **बालकावागच्छतः।** |
| | **बालका आगच्छतः।** |
| **विद्यार्थिनौ इच्छतः।** | **विद्यार्थिनाविच्छतः।** |
| | **विद्यार्थिना इच्छतः।** |

> स्वरे परे एकारस्य अय् इत्यादेशो भवति, ओकारस्य अव् इत्यादेशो भवति, ऐकारस्य आय् इत्यादेशो भवति, औकारस्य आव् इत्यादेशो भवति। सर्वत्र यकार-वकारयोर् विकल्पेन लोपोऽपि भवति।

## पूर्वरूपसन्धिः

| | |
|---|---|
| **त्वं गृहे अवतिष्ठस्व।** | **त्वं गृहेऽवतिष्ठस्व।** |
| **हरे अत्र आगच्छ।** | **हरेऽत्र आगच्छ।** |
| **हरे अमूनि हिमालयशिखराणि प्रेक्षस्व।** | **हरेऽमूनि हिमालयशिखराणि प्रेक्षस्व।** |
| **रामः इदानीम् अस्वस्थालये अस्ति।** | **रामः इदानीम् अस्वस्थालयेऽस्ति।** |
| **गुरो अत्र विराजतां भवान्।** | **गुरोऽत्र विराजतां भवान्।** |
| **श्रद्धालो अतिथिसत्कारं कुरुष्व।** | **श्रद्धालोऽतिथिसत्कारं कुरुष्व।** |

पदान्ताद् एकाराद् ओकाराच् च ह्रस्वे अवर्णे परे पूर्वपरयोः स्थाने पूर्वरूपमेकादेशो भवति।

## प्रकृतिभावसन्धिः

| | |
|---|---|
| **कवी आगमताम्।** | **कवी आगमताम्।** |
| **पशू अचारिष्टाम्।** | **पशू अचारिष्टाम्।** |
| **बालिके अनर्तिष्टाम्।** | **बालिके अनर्तिष्टाम्।** |
| **फले अपप्ताम्।** | **फले अपप्ताम्।** |
| **अहो आगच्छ मित्र।** | **अहो आगच्छ मित्र।** |
| **अहो ईश्वरस्य लीला।** | **अहो ईश्वरस्य लीला।** |
| **तव मतम् अश्रौषम् अथो अहं ब्रवीमि।** | **तव मतम् अश्रौषम् अथो अहं ब्रवीमि।** |
| **एतत् उताहो अदः चत्वरं शोभनम्?** | **एतत् उताहो अदः चत्वरं शोभनम्?** |

द्विवचनस्य ईकार ऊकार एकारश्च स्वरे परेऽपि प्रकृत्या (स्वरूपेण) एवाऽवतिष्ठन्ते। ओकारान्तो निपातश् च स्वरे परेऽपि प्रकृत्यैवाऽवतिष्ठते।

### सप्तानामेव विभक्तीनां प्रयोगः

**रामो** राजमणिः सदा विजयते **रामं** रमेशं भजे,
**रामेणा**ऽभिहता निशाचरचमू **रामाय** **तस्मै** नमः।
**रामान्** नाऽस्ति परायणं परतरं **रामस्य** दासोऽस्म्यहम्
**रामे** चित्तलयः सदा भवतु मे **भो राम** मामुद्धर॥

# सरलनीतिशास्त्रशिक्षाप्रवृत्तिः

अस्ति गङ्गाया दक्षिणे तीरे पाटलिपुत्रं नाम नगरम्। तत्र पुरा सुदर्शनो नाम कश्चिद् बुद्धिमान् राजा बभूव।

एकदा स राजा शास्त्रज्ञानरहितस्य निन्दया यौवनस्य धनोपचयस्य प्रभुत्वस्य अविवेकित्वस्य चाऽनर्थहेतुतायाः प्रतिपादनेन च युक्तावेतौ श्लोकौ कस्य चिन् मुखात् शुश्राव–

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम्।<br>
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः॥<br>
यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता।<br>
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्॥ इति।

ततः शास्त्रमपठितवतां स्वेच्छाचारिणामविनीतानामात्मनः पुत्राणां चरित्रं स्मृत्वा स राजा विचारयामास– "यथा स्फुटितेन अक्ष्णा केवलं पीडा कुरूपता चैव भवतः, न कोऽपि लाभो भवति, तथैव मूर्खेणाऽधार्मिकेण च पुत्रेण स्वकुलस्य दूषणं दुर्यशश्चैव भवतः, न कोऽपि लाभो भवति; तस्माद् मया पुत्राः शिक्षणीयाः, किन्त्वहं स्वयं शिक्षयितुं सम्यग् न जाने, राज्यकर्मणि व्यासक्तस्य मम शिक्षणाय समयोऽपि पर्याप्तो नाऽस्ति, पित्रा मात्रा च पुत्राः पुत्र्यश्च केनाऽपि प्रकारेणाऽवश्यं शिक्षणीयाः, सद्वृत्तकुशला विद्वांसश्च 'पुत्रस्योत्पादनेनैव पिता कृतकृत्यो न भवति, किन्तु पुत्रस्य शिक्षां वृत्तिं गृहस्थाश्रमप्रवेशं च सम्पाद्यैव कृतकृत्यो भवति' इति वदन्ति; तस्मात् पुत्राणां शिक्षणस्य व्यवस्थां कर्तुमेकां पण्डितसभां कुर्वे" इति।

ततश्च स राजा पण्डितसभां कृत्वा उवाच– "भो भोः पण्डिताः, शृण्वन्तु भवन्तः, अस्ति भवत्सु मध्ये कश्चिदेवम्भूतो विद्वान् यो मम पुत्रान् सुकरतया सरलतया च नीतिशास्त्रस्योपदेशेन नीतिशास्त्रज्ञान् विनीतान् सन्मार्गगामिणश्च कर्तुं समर्थः?" इति।

ततस् तस्यां सभायां समवेतः सकलनीतिशास्त्रतत्त्वज्ञो विष्णुशर्मा नाम कश्चन पण्डित उवाच– "राजन्, महाकुले जाता एते राजकुमाराः, तस्मादेते मया सुखेनैव

नीतिशास्त्रं पाठयितुं शक्यन्ते, अहं षण्णां मासानामभ्यन्तर एव एतान् नीतिशास्त्रज्ञान् विनीतान् सन्मार्गगामिणश्च कर्तुं शक्नोमि" इति।

ततश्चाऽतीव प्रसन्नो भूत्वा स राजा तस्य पण्डितस्य विष्णुशर्मणः प्रभूतं सम्मानं कृत्वा नीतिशास्त्रशिक्षणाय तस्मै स्वपुत्रान् समर्पयामास।

विष्णुशर्माऽपि तान् राजपुत्रानादाय प्रासादशिखरमारुरोह। स तत्र महार्हासने समुपविष्टः सुखासनेषूपविष्टानां राजपुत्राणां पुरस्तात्–

मनवे वाचस्पतये शुक्राय पराशराय ससुताय।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः॥

इति नीतिशास्त्रप्रवक्तॄन् नमस्कृत्य तान् राजपुत्रान् कथाच्छलेन नीतिशास्त्रं शिक्षयितुं प्रचक्रमे। ततः प्रभृत्येव लोके सरलनीतिशास्त्रशिक्षा प्रवृत्ताऽभूत् किल।

अधस्तनानां प्रश्नानामुत्तराणि लिखत–

(क) पाटलिपुत्रनामकं नगरं कुत्राऽस्ति?
(ख) सुदर्शनो राजा किं शुश्राव?
(ग) मूर्खेणाऽधार्मिकेण च पुत्रेण किं भवति?
(घ) पिता कथं कृतकृत्यो भवति?
(ङ) सुदर्शनो राजा पण्डितसभां कृत्वा किमुवाच?
(च) विष्णुशर्मा पण्डितः पण्डितसभायां किमुवाच?
(छ) विष्णुशर्मा पण्डितः कियति समये राजपुत्रान् नीतिशास्त्रज्ञान् कर्तुं शक्नोमीत्युवाच?
(ज) सुदर्शनो राजा किमर्थं स्वपुत्रान् कस्मै समर्पयामास?
(झ) विष्णुशर्मा राजपुत्राणां पुरस्तात् किं कर्तुं प्रारेभे?
(ञ) सरलनीतिशास्त्रशिक्षाप्रवृत्तिकथां सङ्क्षेपेण लिखत।

(क) हेतुमण्णिजन्तधातूनां लट्लकारान्तानां रूपाणां प्रयोगाः–

छात्राः पठन्ति।

शिक्षकः छात्रान् पाठयति।

| | |
|---|---|
| **रामः राजा भवति।** | **लोकः रामं राजानं भावयति।** |
| **वादी प्रतिवादिनं जयति।** | **प्राड्विवाकः वादिना प्रतिवादिनं जापयति।** |
| **बालकाः भक्तं खादन्ति।** | **माता बालकैः भक्तं खादयति।** |
| **पुत्री विद्यालयं गच्छति।** | **पिता पुत्रीं विद्यालयं गमयति।** |
| **गौः चरति।** | **गोपालः गां चारयति।** |
| **वृक्षात् फलानि पतन्ति।** | **पथिकः वृक्षात् फलानि पातयति।** |
| **छात्राः कथां शृण्वन्ति।** | **गुरुः छात्रान् कथां श्रावयति।** |
| **शिशुः शेते।** | **माता शिशुं शाययति।** |
| **ब्रह्मचारी वेदम् अधीते।** | **आचार्यः ब्रह्मचारिणं वेदम् अध्यापयति।** |
| **मूर्खाणां कलहेन समयः याति।** | **मूर्खाः कलहेन समयं यापयन्ति।** |
| **अधमर्णः उत्तमर्णाय धनं ददाति।** | **प्राड्विवाकःअधमर्णेन उत्तमर्णाय धनं दापयति।** |
| **नर्तक्यः नृत्यन्ति।** | **धनिनः नर्तकीः नर्तयन्ते।** |
| **बालकः अक्षराणि परिचिनोति।** | **गुरुः बालकम् अक्षराणि परिचाययति।** |
| **पक्षिणः म्रियन्ते।** | **व्याधः पक्षिणः मारयति।** |
| **अतिथिः गृहं प्रविशति।** | **गृहस्थः अतिथिं गृहं प्रवेशयति।** |
| **सेना शत्रुसेनां रुणद्धि।** | **राजा स्वसेनया शत्रुसेनां रोधयते।** |
| **कर्मकराः कर्म कुर्वन्ति।** | **स्वामी कर्मकरान् कर्म कारयते।** |
| **प्रहरी चौरं प्रगृह्णाति।** | **प्रहरिनायकः प्रहरिणा चौरं प्रग्राहयति।** |
| **चौरः परधनं चोरयति।** | **चोरनायकः चौरेण परधनं चोरयते।** |

गत्यर्थानां बुद्ध्यर्थानां भोजनार्थानां शब्दकर्मकाणाम् अकर्मकाणां च क्रियाणामणिजन्तावस्थायाः कर्ता णिजन्तावस्थायां कर्म भवतीति सामान्यतया ज्ञेयम्।

(ख) सनन्तधातूनां लट्लकारान्तानां रूपाणां प्रयोगाः–

| | |
|---|---|
| **बालकः युवकः भवितुम् इच्छति।** | **बालकः युवकः बुभूषति।** |
| **माया संस्कृतं पठितुम् इच्छति।** | **माया संस्कृतं पिपठिषति।** |
| **अहं गणितं पठितुम् इच्छामि।** | **अहं गणितं पिपठिषामि।** |
| **तृषितः पान्थः पानीयं पातुम् इच्छति।** | **तृषितः पान्थः पानीयं पिपासति।** |
| **अयं बालकः मातरं द्रष्टुम् इच्छति।** | **अयं बालकः मातरं दिदृक्षते।** |
| **वयं विद्यालयं गन्तुम् इच्छामः।** | **वयं विद्यालयं जिगमिषामः।** |
| **युवां प्रतिस्पर्धिनः जेतुम् इच्छथः।** | **युवां प्रतिस्पर्धिनः जिगीषथः।** |
| **अमू पान्थौ नदीं तरीतुम् इच्छतः।** | **अमू पान्थौ नदीं तितीर्षतः।** |
| **सर्वे चिरं जीवितुम् इच्छन्ति।** | **सर्वे चिरं जिजीविषन्ति।** |
| **शिशुः शयितुम् इच्छति।** | **शिशुः शिशयिषते।** |
| **छात्रः गुरुं प्रश्नं प्रष्टुम् इच्छति।** | **छात्रः गुरुं प्रश्नं पिपृच्छिषति।** |
| **त्वं किं कर्तुम् इच्छसि?** | **त्वं किं चिकीर्षसि?** |
| **दुःशीलः बालकः कलहं कर्तुम् इच्छति।** | **दुःशीलः बालकः कलहं चिकीर्षति।** |
| **चौराः गृहोपकरणानि चोरयितुम् इच्छन्ति।** | **चौराः गृहोपकरणानि चुचोरयिषन्ति।** |

(ग) यङन्तधातूनां लट्लकारान्तानां रूपाणां प्रयोगाः–

| | |
|---|---|
| **सुशीलः विद्यार्थी गृहेऽपि पाठं पुनःपुनः पठति।** | **सुशीलः विद्यार्थी गृहेऽपि पाठं पापठ्यते।** |
| **ग्रीष्मे सर्वे पानीयं पुनःपुनः पिबन्ति।** | **ग्रीष्मे सर्वे पानीयं पेपीयन्ते।** |
| **अलसः मनुष्यः पुनःपुनः शेते।** | **अलसः मनुष्यः शाशय्यते।** |
| **वर्षासु मयूराः पुनःपुनः नृत्यन्ति।** | **वर्षासु मयूराः नरीनृत्यन्ते।** |
| **कर्मकराः पुनःपुनः कर्म कुर्वन्ति।** | **कर्मकराः कर्म चेक्रीयन्ते।** |

वसन्त्यरण्येषु चरन्ति दूर्वाः पिबन्ति तोयान्यपरिग्रहाणि।
तथाऽपि वध्या हरिणा नराणां को लोकमाराधयितुं समर्थः॥

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | |
|---|---|---|
| गुरुः<br>गुरू<br>गुरवः<br>त्वम्<br>युवाम्<br>यूयम्<br>अहम्<br>आवाम्<br>वयम् | ब्रह्मचारिणम्<br>ब्रह्मचारिणौ<br>ब्रह्मचारिणः<br>भ्रातरम्<br>भ्रातरौ<br>भ्रातॄन् | पाठयति<br>पाठयतः<br>पाठयन्ति<br>पाठयसि<br>पाठयथः<br>पाठयथ<br>पाठयामि<br>पाठयावः<br>पाठयामः |

२. अधोलिखितानि लट्लकारान्तानि क्रियापदानि प्रयुज्य वाक्यानि रचयितव्यानि–

पाठयते। पाठयेते। पाठयन्ते। पाठयसे। पाठयेथे। पाठयध्वे। पाठये। पाठयावहे। पाठयामहे। पाययते। नर्तयते। वादयते। बोधयति।

३. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | |
|---|---|---|
| विद्यार्थी | | |
| विद्यार्थिनौ | विदेशम् | जिगमिषति |
| विद्यार्थिनः | विद्यालयम् | जिगमिषतः |
| विद्यार्थिनी | नगरम् | जिगमिषन्ति |
| विद्यार्थिन्यौ | ग्रामम् | जिगमिषसि |
| विद्यार्थिन्यः | नदीम् | जिगमिषथः |
| त्वम् | उद्यानम् | जिगमिषथ |
| युवाम् | गृहम् | जिगमिषामि |
| यूयम् | महाविद्यालयम् | जिगमिषावः |
| अहम् | विश्वविद्यालयम् | जिगमिषामः |
| आवाम् | | |
| वयम् | | |

४. अधोलिखितानि क्रियापदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

पिपठिषति। पिपठिषतः। पिपठिषन्ति। पिपठिषसि। पिपठिषथः। पिपठिषथ। पिपठिषामि। पिपठिषावः। पिपठिषामः। {उदा.– हरिः संस्कृतं पिपठिषति।}

शिशयिषते। शिशयिषेते। शिशयिषन्ते। शिशयिषसे। शिशयिषेथे। शिशयिषध्वे। शिशयिषे। शिशयिषावहे। शिशयिषामहे। {उदा.– अलसः सदमित् शिशयिषते}

५. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | |
|---|---|---|
| ज्वरितो मनुष्यः | सर्वदा | पानीयं पेपीयते |
| सर्वे मनुष्याः | ग्रीष्मे | पानीयं पेपीयन्ते |
| बालिकाः | वर्षासु | कर्म चेक्रीयन्ते |
| बालकाः | उत्सवेषु | नरीनृत्यन्ते |
| मयूराः | वनेषु | शाशय्यते |
| छात्रः | ग्रामेषु | पाठं पापठ्यते |
| बालकः | विद्यालये | |
| | सदा | |

६. अधोलिखितानि क्रियापदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

नरीनृत्यते। नरीनृत्येते। नरीनृत्यन्ते। नरीनृत्यसे। नरीनृत्येथे। नरीनृत्यध्वे। नरीनृत्ये। नरीनृत्यावहे। नरीनृत्यामहे। {उदा.– नर्तकाः प्रेक्षागृहेषु नरीनृत्यन्ते।}

पापठ्यते। पापठ्येते। पापठ्यन्ते। पापठ्यसे। पापठ्येथे। पापठ्यध्वे। पापठ्ये। पापठ्यावहे। पापठ्यामहे। {उदा.– हरिः गृहे अपि पाठ्यपुस्तकानि पापठ्यते।}

कटुतिक्तकषायाणि वातलानि लघूनि च।
वर्जयेदन्नपानानि शिशिरे शीतलानि च॥

मिष्टमम्लं दधि स्निग्धं दिवास्वप्नं च दुर्जरम्।
अवश्यायमपि प्राज्ञो वसन्ते परिवर्जयेत्॥

तीक्ष्णं रूक्षं च कटुकं कषायं तिक्तकं लघु।
सेव्यं पुराणगोधूमशालिमुद्गयवादिकम्॥

मयूखैर् जगतः स्नेहं ग्रीष्मे पेपीयते रविः।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम्॥

शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति॥

वर्षासु प्रबलो वायुस् तस्मान् मिष्टादयस् त्रयः।
रसाः सेव्या विशेषेण पवनस्योपशान्तये॥

सरोनद्यादिसलिलं स्नाने पाने विवर्जयेत्।
दिवास्वप्नं श्रमं घर्मं प्रावृट्काले न सेवयेत्॥

सेव्याः शरदि यत्नेन कषायस्वादुतिक्तकाः।
क्षीरेक्षुविकृतिक्षौद्रशालिमुद्गादिजाङ्गलाः॥

श्वेतस्रजश् चन्द्रपादाः प्रदोषे लघु चाम्बरम्।
सलिलं च प्रसन्नत्वात् सर्वमेव तदा हितम्॥

तत्राऽन्नपानं मधुरं लघु शीतं सतिक्तकम्।
पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः॥

इक्षवः शालयो मुद्गाः सरोऽम्भः क्वथितं पयः।
शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः॥

तीक्ष्णमम्लं च लवणं दधि तैलासवातपम्।
दिवास्वप्नं पुरोवातं शरत्काले विवर्जयेत्॥

हेमन्ते कटुतीक्ष्णोष्णमम्लक्षारघृतं दधि।
गोधूमतिलमाषेक्षुविकारान् भक्षयेद् बहून्॥
गोरसानिक्षुविकृतीर् वसां तैलं नवौदनम्।
हेमन्तेऽभ्यस्यतस् तोयमुष्णमायुर् न हीयते॥

(चरकसंहिताद्यायुर्वेदग्रन्थेभ्यः)

(क) णिजन्तधातूनां लुङ्लकारान्तानां रूपाणां प्रयोगाः–

**यूयम् अद्य कुत्र अगमत? गुरुः युष्मान् अद्य कुत्र अजीगमत्?**

| | |
|---|---|
| **पुत्रः पण्डितः अभूत्।** | **पिता पुत्रं पण्डितम् अबीभवत्।** |
| **बालकः अद्य भक्तम् अखादीत्।** | **अम्बा अद्य बालकेन भक्तम् अचखादत्।** |
| **बालिका अद्य दुग्धम् अपात्।** | **माता अद्य बालिकां दुग्धम् अपीप्यत्।** |
| **त्वम् अद्य कुत्र अशयिष्ठाः?** | **त्वाम् अद्य माता कुत्र अशीशयत्?** |
| **अहम् अद्य नद्याम् अस्नासिषम्।** | **माम् अद्य अम्बा नद्याम् असिष्णपत्।** |
| **बालकौ भ्रातरौ अरोदिष्टाम्।** | **बालकौ भ्रातरौ कः अरूरुदत्?** |
| **कर्मकरः गाम् अधुक्षत्।** | **गृहपतिः अद्य कर्मकरेण गाम् अदूदुहत्।** |
| **यजमानः अद्य चरुम् अहौषीत्।** | **यजमानः अद्य पुरोहितेन चरुम् अजूहवत्।** |
| **मयूराः अनर्तिषुः।** | **मेघः मयूरान् अनीनृतत्।** |
| **अद्य मम अष्टौ रूप्यकाणि अनशन्।** | **हरिः अद्य मम अष्टौ रूप्यकाणि अनीनशत्।** |
| **हरिः अद्य निबन्धम् अलेखीत्।** | **गुरुः अद्य हरिणा निबन्धम् अलीलिखत्।** |

(ख) सनन्तधातूनां लुङ्लकारान्तानां रूपाणां प्रयोगाः–

| | |
|---|---|
| **रामः विद्वान् भवितुम् ऐषीत्।** | **रामः विद्वान् अबुभूषीत्।** |
| **भ्राता अद्य कथां पठितुम् ऐषीत्।** | **भ्राता अद्य कथाम् अपिपठिषीत्।** |
| **त्वम् अद्य किं पठितुम् ऐषीः?** | **त्वम् अद्य किम् अपिपठिषीः?** |
| **पान्थः पानीयं पातुम् ऐषीत्।** | **पान्थः पानीयम् अपिपासीत्।** |
| **माता अद्य विपणिं गन्तुम् ऐषीत्।** | **माता अद्य विपणिम् अजिगमिषीत्।** |

(ग) यङन्तधातूनां लुङ्लकारान्तानां रूपाणां प्रयोगाः–

| | |
|---|---|
| **अद्य पुनःपुनः वर्षम् अभूत्।** | **अद्य वर्षम् अबोभूयिष्ट।** |
| **बालकः भ्राता पुनःपुनः अखेलीत्।** | **बालकः भ्राता अचेखेलिष्ट।** |
| **हरिः अद्य एकं श्लोकं पुनःपुनः अपठीत्।** | **हरिः अद्य एकं श्लोकम् अपापठिष्ट।** |
| **अद्य एकः छात्रः गुरुं पुनःपुनः प्रश्नम् अप्राक्षीत्।** | **अद्य एकः छात्रः गुरुं प्रश्नम् अपरीपृच्छिष्ट।** |
| **अद्य मयूराः पुनःपुनः अनर्तिषुः।** | **अद्य मयूराः अनरीनर्तिषत।** |

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचनीयानि–

| | | | | |
|---|---|---|---|---|
| गुरुः<br>मातापितरौ<br>शिक्षिकाः<br>त्वम्<br>युवाम्<br>यूयम्<br>अहम्<br>वयम् | अद्य | विद्यार्थिनः<br>पुत्रान्<br>पुत्रीः<br>बालकान्<br>भ्रातॄन्<br>भगिनीः<br>शिष्यान् | धर्मसुभाषितम्<br>अर्थसुभाषितम्<br>नीतिपद्यानि<br>कथाम्<br>श्लोकान्<br>निबन्धम्<br>वाक्यरचनाम्<br>धातुरूपाणि | अपीपठत्<br>अपीपठताम्<br>अपीपठन्<br>अपीपठः<br>अपीपठतम्<br>अपीपठत<br>अपीपठम्<br>अपीपठाम |

२. उदाहरणम् अनुसृत्य अधोलिखितानि क्रियापदानि प्रयुज्य वाक्यानि रचनीयानि–

अरूरुपत्। अरूरुपताम्। अरूरुपन्। अरूरुपः। अरूरुपतम्। अरूरुपत। अरूरुपम्। अरूरुपाव। अरूरुपाम। {उदा.– कृषाणाः अद्य धान्यम् अरूरुपन्।}

३. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचनीयानि–

| | | | |
|---|---|---|---|
| रामः<br>बालकौ<br>बालकाः<br>त्वम्<br>युवाम्<br>यूयम्<br>अहम्<br>आवाम् | अद्य | नदीम्<br>वनम्<br>तिर्यक्सङ्ग्रहालयम्<br>कुत्र | अजिगमिषीत्<br>अजिगमिषिष्टाम्<br>अजिगमिषिषुः<br>अजिगमिषीः<br>अजिगमिषिष्टम्<br>अजिगमिषिष्ट<br>अजिगमिषिषम्<br>अजिगमिषिष्व |

४.उदाहरणम् अनुसृत्य अधोलिखितानि क्रियापदानि प्रयुज्य वाक्यानि रचनीयानि–

अदिदृक्षिष्ट। अदिदृक्षिषाताम्। अदिदृक्षिषत। अदिदृक्षिष्ठाः। अदिदृक्षिषाथाम्। अदिदृक्षिध्वम्। अदिदृक्षिषि। अदिदृक्षिष्वहि। अदिदृक्षिष्महि। {उदा.– अद्य वृद्धाम्बा पौत्रम् अदिदृक्षिष्ट।}

५.अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचनीयानि–

| | | | |
|---|---|---|---|
| हरिः<br>बालकौ<br>क्रीडकाः<br>त्वम्<br>युवाम्<br>यूयम्<br>अहम्<br>आवाम् | अद्य | कन्दुकेन | अचेखेलिष्ट<br>अचेखेलिषाताम्<br>अचेखेलिषत<br>अचेखेलिष्ठाः<br>अचेखेलिषाथाम्<br>अचेखेलिढ्वम्<br>अचेखेलिषि<br>अचेखेलिष्वहि |

६. उदाहरणम् अनुसृत्य अधोलिखितानि क्रियापदानि प्रयुज्य वाक्यानि रचयितव्यानि–

अबोभूयिष्ट। अबोभूयिषाताम्। अबोभूयिषत। अबोभूयिष्ठाः। अबोभूयिषाथाम्। अबोभूयिढ्वम्-अबोभूयिध्वम्। अबोभूयिषि। अबोभूयिष्वहि। अबोभूयिष्महि। {उदा.– अद्य खेलनकूर्दनस्पर्धासु अहं प्रथमः अबोभूयिषि।}

भ्रातरौ ह्यः कन्दुकम् अक्रीणीताम्।

बालकः ह्यः रोटिकाम् अखादत्।
विद्यार्थिनौ ह्यः अनुपस्थितौ अभवताम्।
मातापितरौ ह्यः नगरम् अगच्छताम्।
त्वं ह्यः किम् अपठः ?
गोपालः ह्यः मार्गे प्रहरिणम् अपश्यत्।
वयं ह्यः आश्चर्यकरीं कथाम् अशृणुम।
ग्रामवासिनः ह्यः नेतॄणां भाषणम् अशृण्वन्।
ह्यः अग्निः मातुः हस्तम् अप्लोषत्।
रमा ह्यः विद्यालयं न अयात्।
नार्यः ह्यः नदीनां सङ्गमे अस्नुः।
ऋत्विक् ह्यः चरुम् अजुहोत्।
धनिनी ह्यः ब्राह्मणेभ्यः वस्त्रम् अददात्।
श्रद्धालवः जनाः ह्यः ब्राह्मणेभ्यः दानम् अददुः।
भगिनी ह्यः मार्गे सर्पात् अबिभेत्।
ह्यः मम भ्रातुः पञ्चदश रूप्यकाणि अनश्यन्।
नार्यः ह्यः मन्दिरे अनृत्यन्।
पान्थः ह्यः नदीं तरितुं न अशक्नोत्।
विद्यार्थिनः ह्यः निबन्धम् अलिखन्।
कश्चन दुःशीलः छात्रः ह्यः मम लेखनीम् अचोरयत्।
ह्यः कृषकाः चण्डे घर्मे धान्यम् अशुष्कयन्।

अधर्मान् नाऽत्रसः पाप लोकवादान् न चाऽबिभेः।
धर्मदूषण नूनं त्वं नाऽजाना नाऽशृणोरिदम्॥

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

(क)

| | | | |
|---|---|---|---|
| | | भक्तम् | |
| बालकः | | दालम् | अखादत् |
| बालिके | | व्यञ्जनम् | अखादताम् |
| विद्यार्थिनः | | फलानि | अखादन् |
| त्वम् | | लड्डूकम् | अखादः |
| युवाम् | ह्यः | मिष्टान्नम् | अखादतम् |
| यूयम् | | कदलीफलम् | अखादत |
| अहम् | | शष्कुलीः | अखादम् |
| आवाम् | | रोटिकाः | अखादाव |
| वयम् | | संयावम् | अखादाम |
| | | यवागूम् | |

(ख)

| | | | |
|---|---|---|---|
| अहम् | | सिंहम् | प्रैक्षथाः |
| आवाम् | | व्याघ्रौ | प्रैक्षेथाम् |
| वयम् | | भल्लूकम् | प्रैक्षध्वम् |
| त्वम् | | वानरान् | प्रैक्षे |
| युवाम् | | हरिणम् | प्रैक्षावहि |
| यूयम् | ह्यः | गण्डकम् | प्रैक्षामहि |
| विद्यार्थी | | मयूरान् | प्रैक्षत |
| पितामही | | चिल्लम् | प्रैक्षेताम् |
| बालकौ | | शुकम् | प्रैक्षन्त |
| विद्यार्थिन्यौ | | सारिकाम् | |
| बालकाः | | | |

२. अधोलिखितानि लङ्लकारान्तानि क्रियापदानि प्रयुज्य वाक्यानि रचयितव्यानि–

अगच्छत्। अगच्छताम्। अगच्छन्। अगच्छः। अगच्छतम्। अगच्छत। अगच्छम्। अगच्छाव। अगच्छाम। {उदा. – अहं ह्यः मामालयम् अगच्छम्।}

अपठत्। अपठताम्। अपठन्। अपठः। अपठतम्। अपठत। अपठम्। अपठाव। अपठाम। {उदा. – वयं ह्यः किमपि नैव अपठाम।}

अखेलत्। अखेलताम्। अखेलन्। अखेलः। अखेलतम्। अखेलत। अखेलम्। अखेलाव। अखेलाम। {उदा. – युवां ह्यः केन अखेलतम्?}

अगर्जत्। अगर्जताम्। अगर्जन्। {उदा. – ह्यः वने सिंहः अगर्जत्।}

अकम्पत। अकम्पेताम्। अकम्पन्त। {उदा. – ह्यः वातेन वृक्षशाखाः भृशम् अकम्पन्त।}

अशोभत। अशोभेताम्। अशोभन्त। {उदा. – ह्यः चन्द्रमाः भृशम् अशोभत।}

आदत्।आत्ताम्।आदन्।आदः।आत्तम्।आत्त।आदम्। आद्व। आद्म।{उदा. –त्वं ह्यः रोटिकाम् आदः?}

अशेत। अशयाताम्। अशेरत। अशेथाः। अशयाथाम्। अशेध्वम्। अशयि। अशेवहि। अशेमहि। {उदा. – मम भ्राता ह्यः मम शय्यायामशेत। त्वं ह्यः कुत्र अशेथाः?}

अनश्यत्। अनश्यताम्। अनश्यन्। अनश्यः। अनश्यतम्। अनश्यत। {उदा. – ह्यः यूयं कुत्र अनश्यत?}

अभृज्जत्। अभृज्जताम्। अभृज्जन्। अभृज्जः। अभृज्जतम्। अभृज्जत। अभृज्जम्। अभृज्जाव। अभृज्जाम। {उदा. – ह्यः भगिन्यः मकायान् अभृज्जन्।}

अलिम्पत्। अलिम्पताम् । अलिम्पन्। अलिम्पः। अलिम्पतम्। अलिम्पत। अलिम्पम्। अलिम्पाव। अलिम्पाम। अलिम्पत। अलिम्पेताम्। अलिम्पन्त इ.। {उदा. – ह्यः वयम् अस्माकं गृहम् अलिम्पाम।}

अरुणत्। अरुन्धाम्। अरुन्धन्। अरुणः-अरुणत्। अरुन्धम्। अरुन्ध। अरुणधम्। अरुन्ध्व। अरुन्ध्म। अरुन्ध। अरुन्धाताम्। अरुन्धत इ.। {उदा. – ह्यः भूस्खलनम् मार्गमरुणत्।}

अक्रीणात्। अक्रीणीताम्। अक्रीणन्। अक्रीणाः। अक्रीणीतम्। अक्रीणीत। अक्रीणाम्। अक्रीणीव। अक्रीणीम। अक्रीणीत। अक्रीणाताम्। अक्रीणत इ.। {उदा. – ह्यः वयं विपणिं गत्वा पतङ्गकान् अक्रीणीम।}

अमार्जयत्। अमार्जयताम्। अमार्जयन्। अमार्जयः। अमार्जयतम्। अमार्जयत। अमार्जयम्। अमार्जयाव। अमार्जयाम। अमार्जयत। अमार्जयेताम्। अमार्जयन्त इ.। {उदा. – ह्यः छात्राः भोजनभाण्डानि स्वयम् अमार्जयन्।}

मयि विद्यालयं गते मम भ्राता लड्डूकं चखाद।
अस्मासु बहिर् गतेषु भ्रातरौ रोटिकां चखादतुः।
मयि ग्रामं गते भगिन्यः मिष्टान्नं चखादुः।
भिक्षुः अद्य ग्रामे बभ्राम।
पर्यटकौ अद्य नगरे भ्रेमतुः।
विद्यार्थिनः अद्य नगरे भ्रेमुः।
अद्य मातुलः मामालयात् आजगाम।
तीर्थयात्रिणः अद्य नद्यां सस्नुः।
पिता अद्य मार्गणाय द्वे रूप्यके ददौ।
गोपालः अद्य वने वानरेभ्यः बिभाय।
अद्य गोपालस्य विंशतिः रूप्यकाणि नेशुः।
अद्य नार्यः मन्दिरे ननृतुः।
मम भगिनी मम पुस्तिकायां लिलेख।
अद्य रथ्यायां मोटरयानदुर्घटनायाम् एकः यात्री ममार।
अद्य रात्रौ पानीयं पपात।
मम पिता अद्य नवीनं पुस्तकं चिक्राय।
माता अद्य महादेवं पूजयामास।
चौराः अद्य बहूनि गृहोपकरणानि चोरयामासुः।
अद्य श्वश्रूः पुत्रवधूं मायतनं प्रस्थापयाञ्चकार।
ह्यः गुरुः छात्रान् कथां श्रावयाम्बभूव।
अद्य प्रातः आचार्यः ब्रह्मचारिणं वेदम् अध्यापयामास।
पुरा अपि युवकाः धनम् अर्जितुं विदेशं जिगमिषाञ्चक्रुः।
अद्य मयि विद्यालयं गते मम शिशुः भ्राता रोरुदाञ्चक्रे।

शूलानि भ्रमयाञ्चक्रुर् बाणानाददिरे शुभान्।
भ्रेमुश् चुकुर्दिरे रेसुर् ववल्गुश्च पदातयः॥

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

(क)

| | | |
|---|---|---|
| बालकः | | चखाद |
| बालकौ | | चखादतुः |
| बालकाः | | चखादुः |
| त्वम् | भक्तम् | चखादिथ |
| युवाम् | फलानि | चखादथुः |
| यूयम् | अशुद्धं वस्तु | चखाद |
| अहम् | | चखाद |
| आवाम् | | चखादिव |
| वयम् | | चखादिम |

(ख)

| | | |
|---|---|---|
| भ्राता | | शिश्ये |
| भ्रातरौ | | शिश्याते |
| भ्रातरः | | शिश्यिरे |
| त्वम् | मूर्च्छया भूम्याम् | शिश्यिषे |
| युवाम् | मम शय्यायाम् | शिश्याथे |
| यूयम् | | शिश्यिढ्वे |
| अहम् | | शिश्ये |
| आवाम् | | शिश्यिवहे |
| वयम् | | शिश्यिमहे |

२. अधोलिखितानि लिट्लकारान्तानि क्रियापदानि प्रयुज्य वाक्यानि रचयितव्यानि–

बभूव। बभूवतुः। बभूवुः। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम। {उदा.– अहं परीक्षायां प्रथमो बभूव।}

जगर्ज। जगर्जतुः। जगर्जुः। {उदा.– वने सिंहः जगर्ज।}

जगाम। जग्मतुः। जग्मुः। जगमिथ-जगन्थ। जग्मथुः। जग्म। {उदा.– मम भ्राता पण्यशालां जगाम।}

पपाठ। पेठतुः पेठुः। {उदा.– मयि अनुपस्थिते मम भ्राता मम पुस्तकं पपाठ।}

जिहिण्डे। जिहिण्डाते। जिहिण्डिरे। {उदा.– तव पिताऽद्य नगरं गन्तुं जिहिण्डे।}

पपौ। पपतुः। पपुः। {उदा.– बिडालः अद्य सर्वं दुग्धं पपौ।}

उवाच। ऊचतुः। ऊचुः। उवचिथ-उवक्थ। ऊचथुः। ऊच। उवाच-उवच। ऊचिव। ऊचिम। {उदा.– इत्थं माता उवाच।}

सस्मार। सस्मरतुः। सस्मरुः। सस्मर्थ। सस्मरथुः। सस्मर। {उदा.– विद्यालयं गताः बालकाः गृहं सस्मरुः।}

आद। आदतुः। आदुः। आदिथ। आदथुः। आद। आद। आदिव। आदिम। जघास। जक्षतुः। जक्षुः। जघसिथ। जक्षथुः। जक्ष। जघास-जघस। जक्षिव। जक्षिम। {उदा.– अस्मासु ग्रामं गतेषु बालकाः मिष्टान्नम् आदुः।}

बिभयाञ्चकार। बिभयाञ्चक्रतुः। बिभयाञ्चक्रुः। {उदा.– तिर्यक्सङ्ग्रहालये बालिकाः व्याघ्रात् बिभयाञ्चक्रुः।}

ददौ। ददतुः। ददुः। ददे। ददाते। ददिरे। {उदा.– मम भ्राता मार्गणाय मम सर्वाणि पुराणानि लुग्नानि ददौ।}

चुक्रोध। चुक्रुधतुः। चुकुधुः। चुक्रोधिथ। चुक्रुधथुः। चुक्रुध। चुक्रोध। चुक्रुधिव। चुक्रुधिम। {उदा.– विद्यालये अद्य गुरुः हरये चुक्रोध।}

ननाश। नेशतुः। नेशुः। नेशिथ-ननंष्ठ। नेशथुः। नेश। ननाश-ननश। नेशिव-नेश्व। नेशिम-नेश्म। {उदा.– ह्यः विष्णोः त्रिंशद् रूप्यकाणि नेशुः।}

पुस्फोट। पुस्फुटतुः। पुस्फुटुः। {उदा.– ह्यः मम गृहे द्वे काचकूपिके पुस्फुटतुः।}

जुगुम्फ। जुगुम्फतुः। जुगुम्फुः। {उदा.– ह्यः बालिकाः शोभनाः मालाः जुगुम्फुः।}

बभञ्ज। बभञ्जतुः। बभञ्जुः। बभञ्जिथ-बभङ्क्थ। बभञ्जथुः। बभञ्ज। बभञ्ज। बभञ्जिव। बभञ्जिम। {उदा.– मम शम्याकां त्वं बभञ्जिथ।}

चिक्राय। चिक्रियतुः। चिक्रियुः। चिक्रिये। चिक्रियाते। चिक्रियिरे। {उदा.– पिता मह्यं कन्दुकं चिक्राय।}

चोरयामास। चोरयामासतुः। चोरयामासुः। {उदा.– अद्य चौरः बहुमूल्यानि आभरणानि चोरयामास।}

# नीलवर्णस्य शृगालस्य कथा

एकस्मिन् देशे एको रजकावसथ आसीत्। तत्र रजकाः स्थूलेषूर्ध्वकेषु भाण्डेषु रञ्जनार्थं नीलीं पानीये मेलयित्वा गृहस्याऽङ्गने रक्षन्ति स्म। एकदा समीपस्थस्य वनस्य कश्चन शृगालः कुक्कुटादिकमाहर्तुमपराह्णे तत्राऽऽजगाम। स चेतस्ततः पर्यटन् दैववशादेकस्मिन् नीलीभाण्डे पपात। ततः स शृगालो नीलवर्णो बभूव। ततः स ततो निष्क्रम्य वनं प्रति जगाम।

वनं प्राप्याऽऽत्मनः शरीरं नीलवर्णं दृष्ट्वा स विचारयामास– "इदानीमहं विशिष्टवर्णोऽभूवम्। तस्मादहमात्मन उत्कर्षं साधयामि" इति। इत्थं विचारं कृत्वा सोऽन्याञ् शृगालान् विहूय बभाण– "भगवती वनदेवी मामेतस्य वनस्य राजानमकार्षीत्, अद्यप्रभृत्यस्मिन् वने सर्वैः पशुभिर् ममाऽऽज्ञया व्यवहारः करणीयः" इति। ततः सर्वे शृगालास् तं विशिष्टवर्णं विलोक्य साष्टाङ्गपातं प्रणम्य बभणुः– "यथाऽऽज्ञापयति देवस् तथैव कुर्मः" इति। ततः स नीलवर्णः शृगालः शृगालद्वारा व्याघ्रं भल्लूकं सिंहं चाऽऽहूयाऽऽत्मनः सेवायां नियुयुजे। एतेन प्रकारेण सर्वेष्वेव वनवासिषु पशुषु तस्य नीलवर्णस्य शृगालस्याऽऽधिपत्यं बभूव। एवं च स प्रथमं स्वजातीयैः पशुभिः परिवृतः सन् आत्मन आधिपत्यं साधयामास।

पश्चात् स सिंह-व्याघ्र-भल्लूकादीनुत्तमपरिजनान् प्राप्य आत्मनः सभायां शृगालान् दृष्ट्वा लज्जमानः स्वजातीयान् परिजनान् दूरीचकार। तस्य तादृशेन व्यवहारेण सर्वे शृगाला अत्यन्तं दुःखिता बभूवुः। ततस् तेष्वेको वृद्धतमः शृगालो बभाण– "दुःखिता न भवत, राजा भूत्वा गर्वितः स नीलवर्णः शृगालोऽस्मान् दूर्यकार्षीत्, तस्मादहं स यथा नश्यति, तथा युक्तिं करिष्ये" इति। ततः स वृद्धः शृगालः पुनर् बभाण– "युष्मानहमेकां

युक्तिं कथयामि, वयं सर्वे मिलित्वा तस्या युक्तेः प्रयोगं करवामहै" इति। ततः सर्वे शृगालाः– "सा युक्तिः काऽस्ति?" इत्यूचुः। ततो वृद्धः शृगालो बभाण– "सिंहादयो वर्णमात्रेण प्रतारिताः सन्तो वस्तुतोऽयं शृगाल एवाऽस्तीत्यज्ञात्वाऽयं राजाऽस्तीति मन्यन्ते। तस्माद् यथा ते तम् "अयं शृगालोऽस्ति" इति जानन्ति, तथा करणीयम्। तथा कर्तुं वयं सर्वे मिलित्वा तस्य संश्रवे स्थित्वा महाशब्दं करवामहै। ततोऽस्माकं शब्दं श्रुत्वा जातिस्वभावात् सोऽपि शब्दं करिष्यति। ततश्च तं शृगालं ज्ञात्वा सिंहादयो मारयिष्यन्ति" इति।

ततः सायङ्काले भूते सति वृद्धस्य शृगालस्य वचनात् सर्वे शृगाला मिलित्वा नीलवर्णस्य शृगालस्य संश्रवे स्थित्वा महाशब्दं कर्तुमारेभिरे। जातिस्वभाव-परवशः स नीलवर्णः शृगालोऽपि तच् श्रुत्वा शब्दं कर्तुमारेभे। ततः शब्दात् "शृगालोऽयम्" इति ज्ञात्वा तत्पार्श्ववर्ती सिंहस् तं नीलवर्णं शृगालं लीलया मारयामास। एवं परपक्षमाश्रितः शृगालो विपन्नो बभूव। तस्मात् नीतिज्ञा वदन्ति–

आत्मपक्षं परित्यज्य परपक्षेषु यो रतः।
स परैर् हन्यते मूढो नीलवर्णशृगालवत्॥ इति।

अधोलिखितानां प्रश्नानामुत्तराणि लिखत–

(क) शृगालः किमर्थं रजकावसथ आजगाम?
(ख) शृगालः कुत्र पपात?
(ग) शृगाल आत्मनो वर्णं नीलं दृष्ट्वा किं विचारयामास?
(घ) के नीलवर्णं शृगालं साष्टाङ्गपातं प्रणेमुः?
(ङ) नीलवर्णः शृगालः कौंस्कान् पशूनात्मनः सेवायां नियुयुजे?
(च) नीलवर्णः शृगालः कीदृशं व्यवहारं चकार?
(छ) नीलवर्णस्य शृगालस्य व्यवहारेण के दुःखिता बभूवुः?
(ज) वृद्धः शृगालोऽन्यान् शृगालान् किं बभाण?
(झ) सर्वे शृगालाः किं चक्रुः?
(ञ) नीलवर्णं शृगालं को मारयामास?
(ट) उक्तायाः कथायाः का शिक्षा प्राप्यते?

भगिन्यः एतानि फलानि खादिष्यन्ति।

गावः अद्य चत्वरे चरिष्यन्ति।

रामः मातुलगृहे मातुलानीं द्रक्ष्यति।

अम्बा अद्य मूलकं व्यञ्जनं पक्ष्यति।

युवाम् आकाशवाणीयन्त्रात् नवीनं वृत्तान्तं श्रोष्यथः।

मां दृष्ट्वा तव कुक्कुरः पलायिष्यते।

श्रान्तौ ऋषभौ शकटं न वक्ष्यतः।

एतं भारं बलवन्तः गर्दभाः वक्ष्यन्ति।

अथ शीघ्रम् एव चन्द्रमाः उदेष्यति।

सौचिकः सुन्दराणि लुग्नानि सेविष्यति।

नर्तक्यः सायङ्काले नर्तिष्यन्ति।

अद्य गुरुः कठिनान् प्रश्नान् प्रक्ष्यति।

विषयुक्तम् अन्नं खादित्वा मूषकाः मरिष्यन्ति।

माता आगत्य मिष्टखादिकां वण्टयिष्यति।

अहम् एतां मालां भगवते अर्पयिष्ये।

गुरुः अद्य न पाठयिष्यति।

गुरुः अद्य रामायणस्य कथां श्रावयिष्यति।

कृषकाः वाट्यां बन्धगोभीं रोपयिष्यन्ति।

एषा पण्यशाला सायङ्काले उद्घाटयिष्यते।

उद्यंस्यति हरिर् वज्रं विचरिष्यति निर्भयः।
भोक्ष्यते यज्ञभागाँश्च शूरमानं च वक्ष्यति॥
रविस् तप्स्यति निश्शङ्कं वास्यत्यनियतं मरुत्।
निर्वर्त्स्यत्यृतुसङ्घातः स्वेच्छयेन्दुरुदेष्यति॥

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

(क)

| | | |
|---|---|---|
| अहम्<br>आवाम्<br>वयम्<br>विद्यार्थी<br>बालिके<br>बालकाः<br>त्वम्<br>युवाम्<br>यूयम् | विद्यालयम्<br>नगरम्<br>पण्यशालाम्<br>उद्यानम्<br>गृहम्<br>कुत्र | गमिष्यति<br>गमिष्यतः<br>गमिष्यन्ति<br>गमिष्यसि<br>गमिष्यथः<br>गमिष्यथ<br>गमिष्यामि<br>गमिष्यावः<br>गमिष्यामः |

(ख)

| | | |
|---|---|---|
| रामः<br>बालिके<br>बालकाः<br>अहम्<br>आवाम्<br>वयम्<br>त्वम्<br>युवाम्<br>यूयम् | अद्य नद्याम्<br>अद्य पुष्करिण्याम् | प्लोष्यसे<br>प्लोष्येथे<br>प्लोष्यध्वे<br>प्लोष्यते<br>प्लोष्येते<br>प्लोष्यन्ते<br>प्लोष्ये<br>प्लोष्यावहे<br>प्लोष्यामहे |

२. अधोलिखितानि लृट्लकारान्तानि क्रियापदानि प्रयुज्य वाक्यानि रचयितव्यानि–

स्मरिष्यति। स्मरिष्यतः। स्मरिष्यन्ति। स्मरिष्यसि। स्मरिष्यथः। स्मरिष्यथ। स्मरिष्यामि। स्मरिष्यावः। स्मरिष्यामः। {उदा.– वयं प्रतिदिनं देवताः स्मरिष्यामः।}

अत्स्यति। अत्स्यतः। अत्स्यन्ति। अत्स्यसि। अत्स्यथः। अत्स्यथ। अत्स्यामि। अत्स्यावः। अत्स्यामः। {उदा.– अयं छात्रः पश्चात् अत्स्यति।}

क्रोत्स्यति। क्रोत्स्यतः। क्रोत्स्यन्ति। क्रोत्स्यसि। क्रोत्स्यथः। क्रोत्स्यथ। क्रोत्स्यामि। क्रोत्स्यावः। क्रोत्स्यामः। {उदा.– अद्य पिता तुभ्यं क्रोत्स्यति।}

गुम्फिष्यति। गुम्फिष्यतः। गुम्फिष्यन्ति। गुम्फिष्यसि। गुम्फिष्यथः। गुम्फिष्यथ। गुम्फिष्यामि। गुम्फिष्यावः। गुम्फिष्यामः। {उदा.– माया एतैः फुल्लैः रम्यां मालां गुम्फिष्यति।}

पेक्ष्यति। पेक्ष्यतः। पेक्ष्यन्ति। पेक्ष्यसि। पेक्ष्यथः। पेक्ष्यथ। पेक्ष्यामि। पेक्ष्यावः। पेक्ष्यामः। {उदा.– अहमद्य गोधूमान् पेक्ष्यामि।}

क्रेष्यति। क्रेष्यतः। क्रेष्यन्ति। क्रेष्यसि। क्रेष्यथः। क्रेष्यथ। क्रेष्यामि। क्रेष्यावः। क्रेष्यामः। क्रेष्यते। क्रेष्येते। क्रेष्यन्ते इ.। {उदा.– हरिः अद्य पुस्तकं क्रेष्यति}।

ज्ञास्यति। ज्ञास्यतः। ज्ञास्यन्ति। ज्ञास्यसि। ज्ञास्यथः। ज्ञास्यथ। ज्ञास्यामि। ज्ञास्यावः। ज्ञास्यामः। {उदा.– त्वं पश्चात् सर्वं ज्ञास्यसि।}

वण्टयिष्यति। वण्टयिष्यतः। वण्टयिष्यन्ति। वण्टयिष्यसि। वण्टयिष्यथः। वण्टयिष्यथ। वण्टयिष्यामि। वण्टयिष्यावः। वण्टयिष्यामः। {उदा.– अम्बा आगत्य एतानि फलानि वण्टयिष्यति।}

**लट्-लुङ्-लङ्-लिट् च लृङ् लुट् च ततो विध्यादिलिङ् तथा।**
**आशीर्लिङ् लोट् च लेट् लृङ् च लकाराः पाणिनेर् मताः॥**

**लङ् वर्तमाने भूते लुङ्-लङ्-लिटो लृङ् भविष्यति।**
**लुट् च, विध्याशिषोर् लिङ् लोट् वेदे लेट् लृङ् क्रियात्यये॥**

आवामेतं प्रश्नं श्वः गुरुं प्रष्टास्वः।

**बालिके श्वः विद्यालयं न गन्तारौ।**
**पक्वानि आम्रफलानि श्वः अवश्यं पतितारः।**
**अहं श्वः पुस्तिकाः क्रीत्वा आनेतास्मि।**
**माता श्वः चिचिण्डकं व्यञ्जनं पक्ता।**
**बालिके श्वः भ्रातरं द्रष्टारौ।**
**भगिनी श्वः मिष्टान्नम् अत्ता।**
**श्वः त्वं कुत्र शयितासे ?**
**श्रेष्ठी श्वः दीनेभ्यः वस्त्रं दाता।**
**नार्यः श्वः हरितालिकायां मन्दिरे नर्तितारः।**
**सैनिकाः श्वः प्रभाते सूर्ये उदिते योद्धारः।**
**दीक्षितः यजमानः श्वः सोमं सोता।**
**अहं श्वः सिंहस्य विषये निबन्धं लेखितास्मि।**
**कृषकः श्वः सर्वं क्षेत्रं कर्ष्टा।**
**अम्बा श्वः गोधूमान् पेष्टा।**
**इदं कार्यं कर्मकराः श्वः कर्तारः।**
**पिता श्वः त्वां ताडयिता।**
**पण्यशालिकः श्वः पण्यशालां न उद्घाटयिता।**
**पितामही श्वः कथां श्रावयिता।**

ततो रामो हनूमन्तमुक्तवान् हृष्टमानसम्।
अयोध्यां श्वः प्रयातासि कपे भरतपालिताम्।।

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

(क)

| | | | |
|---|---|---|---|
| बालकः | | | खादितासि |
| बालिका | | भक्तम् | खादितास्थः |
| बालकौ | | दालम् | खादितास्थ |
| बालिकाः | | व्यञ्जनम् | खादिता |
| अहम् | श्वः | फलानि | खादितारौ |
| आवाम् | | आम्रम् | खादितारः |
| वयम् | | सेवम् | खादितास्मि |
| त्वम् | | अषाडवरागम् | खादितास्वः |
| युवाम् | | | खादितास्मः |
| यूयम् | | | |

(ख)

| | | | |
|---|---|---|---|
| बालकः | | | शयिता |
| बालिके | | | शयितारौ |
| बालकौ | | | शयितारः |
| बालकाः | | पल्यङ्के | शयितासे |
| त्वम् | श्वः | कुत्र | शयितासाथे |
| युवाम् | | नवीनायां शय्यायाम् | शयिताध्वे |
| यूयम् | | खट्वायाम् | शयिताहे |
| अहम् | | | शयितास्वहे |
| वयम् | | | शयितास्महे |
| आवाम् | | | |

२. अधोलिखितानि लुट्लकारान्तानि क्रियापदानि प्रयुज्य वाक्यानि रचयितव्यानि–

गन्ता। गन्तारौ। गन्तारः। गन्तासि। गन्तास्थः। गन्तास्थ। गन्तास्मि। गन्तास्वः। गन्तास्मः। {उदा.– रामः श्वः विद्यालयं न गन्ता। अहं श्वः विपणिं गन्तास्मि}।

जपिता। जपितारौ। जपितारः। जपितासि। जपितास्थः। जपितास्थ। जपितास्मि। जपितास्वः। जपितास्मः। {उदा.– श्वः सूर्यग्रहणे बहवः जनाः मन्त्रं जपितारः।}

अत्ता। अत्तारौ। अत्तारः। अत्तासि। अत्तास्थः। अत्तास्थ। अत्तास्मि। अत्तास्वः। अत्तास्मः। {उदा.– श्वः हरिशयन्याम् एकादश्यां वयं फलानि एव अत्तास्मः।}

होता। होतारौ। होतारः। होतासि। होतास्थः। होतास्थ। होतास्मि। होतास्वः। . होतास्मः। {उदा.– श्वः यजमानः इन्द्राय दधि होता।}

योद्धा। योद्धारौ। योद्धारः। योद्धासे। योद्धासाथे। योद्धाध्वे। योद्धाहे। योद्धास्वहे। योद्धास्महे। {उदा.– श्वः सूर्ये उदिते सैनिकाः योद्धारः।}

परिचेता। परिचेतारौ। परिचेतारः। परिचेतासि। परिचेतास्थः। परिचेतास्थ। परिचेतास्मि। परिचेतास्वः। परिचेतास्मः। ''''परिचेतासे। परिचेतासाथे। परिचेताध्वे इ.। {उदा.– श्वः त्वं नवीनं मित्रं परिचेतासि।}

लेप्ता। लेप्तारौ। लेप्तारः। लेप्तासि। लेप्तास्थः। लेप्तास्थ। लेप्तास्मि। लेप्तास्वः। लेप्तास्मः। '''' लेप्तासे। लेप्तासाथे। लेप्ताध्वे। लेप्ताहे। लेप्तास्वहे। लेप्तास्महे। {उदा.– श्वः कृषकाः खलं लेप्तारः।}

पेष्टा। पेष्टारौ। पेष्टारः। पेष्टासि। पेष्टास्थः। पेष्टास्थ। पेष्टास्मि। पेष्टास्वः। पेष्टास्मः। {उदा.– वयं श्वः यन्त्रेण गोधूमान् पेष्टास्मः।}

कर्ता। कर्तारौ। कर्तारः। कर्तासि। कर्तास्थः। कर्तास्थ। कर्तास्मि। कर्तास्वः। कर्तास्मः। '''' कर्तासे। कर्तासाथे। कर्ताध्वे। कर्ताहे। कर्तास्वहे। कर्तास्महे। {उदा.– श्वः वयं क्षेत्रे कर्म कर्तास्महे।}

क्रेता। क्रेतारौ। क्रेतारः। क्रेतासि। क्रेतास्थः। क्रेतास्थ। क्रेतास्मि। क्रेतास्वः। क्रेतास्मः। '''' क्रेतासे। क्रेतासाथे। क्रेताध्वे इ.। {उदा.– माया श्वः नवीनं पुस्तकं क्रेता। त्वं श्वः किं क्रेतासे?}

ताडयिता। ताडयितारौ। ताडयितारः। ताडयितासि। ताडयितास्थः। ताडयितास्थ। ताडयितास्मि। ताडयितास्वः। ताडयितास्मः। ताडयितासे। ताडयितासाथे इ.।{उदा.– पिता श्वः गृहम् आगत्य त्वां ताडयिता।}

शुष्कयिता। शुष्कयितारौ। शुष्कयितारः। शुष्कयितासि। शुष्कयितास्थः। शुष्कयितास्थ। शुष्कयितास्मि। शुष्कयितास्वः। शुष्कयितास्मः। '''' शुष्कयितासे। शुष्कयितासाथे इ.। {उदा.– श्वः कृषकाः धान्यं शुष्कयितारः।}

**युवां सुशीलौ भवेतम्।**

**बालकाः असावधानाः न भवेयुः।**
**अहं परिश्रमी भवेयम्।**
**वयम् उद्योगिनः भवेम।**
**विद्यार्थिनः सम्यक् पठेयुः।**
**त्वम् एतां वाटीं खनेः।**
**त्वम् विना कारणं न हसेः।**
**युवां पण्यशालायाः लवणम् आनयेतम्।**
**बालकाः गभीरे जलाशये न प्लवेरन्।**
**बालकाः शनैःशनैः जनयानम् आरोहेयुः।**
**ब्रह्मचारी प्रतिदिनं स्नायात्।**
**यूयं स्वच्छायां पुष्करिण्यां स्नायात।**
**यूयं दीनाय दुःखिने मार्गणाय पणान् दद्यात।**
**धार्मिकाः सुचरित्राय ब्राह्मणाय दानं ददीरन्।**
**बुद्धिमन्तः जनाः अक्षैर् न दीव्येयुः।**
**जनाः अवकरं मार्गे न प्रास्येयुः।**
**विद्यार्थिनः सुन्दराणि अक्षराणि लिखेयुः।**
**बालकाः प्रतिपञ्चाहं नखान् निकृन्तेयुः।**
**विद्यार्थिनः स्वकार्याणि स्वयम् एव कुर्वीरन्।**
**भवान् भोजनं कुर्वीत।**
**बालकाः स्वच्छानि लुग्नानि लगयेयुः।**
**भूमिपतयः समुचितां भृतिं दत्त्वा एव कर्मकरान् कर्म कारयीरन्।**

बकवच् चिन्तयेदर्थान् सिंहवच् च पराक्रमेत्।
वृकवच् चाऽवलुम्पेत शशवच् च विनिष्पतेत्।।
अलब्धं चैव लिप्सेत लब्धं रक्षेत् प्रयत्नतः।
रक्षितं वर्धयेच् चैव वृद्धं पात्रेषु निक्षिपेत्।।

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

(क)

| | | |
|---|---|---|
| बालकः<br>बालिके<br>बालिकाः<br>त्वम्<br>युवाम्<br>यूयम्<br>अहम्<br>आवाम्<br>वयम् | समये विद्यालयम्<br>नगरम्<br>पण्यशालाम्<br>मामालयम्<br>ग्रामम्<br>नदीम् | गच्छेत्<br>गच्छेताम्<br>गच्छेयुः<br>गच्छेः<br>गच्छेतम्<br>गच्छेत<br>गच्छेयम्<br>गच्छेव<br>गच्छेम |

(ख)

| | | | |
|---|---|---|---|
| बालिका<br>पुत्रौ<br>बालकाः<br>अहम्<br>आवाम्<br>वयम्<br>त्वम्<br>युवाम्<br>यूयम् | क्षेत्रे<br>वाटे | (न) | हिण्डेत<br>हिण्डेयाताम्<br>हिण्डेरन्<br>हिण्डेथाः<br>हिण्डेयाथाम्<br>हिण्डेध्वम्<br>हिण्डेय<br>हिण्डेवहि<br>हिण्डेमहि |

२. अधोलिखितानि विध्यादिलिङन्तानि क्रियापदानि प्रयुज्य वाक्यानि रचयितव्यानि–

पचेत्। पचेताम्। पचेयुः। पचेः। पचेतम्। पचेत। पचेयम्। पचेव। पचेम। पचेत। पचेयाताम्। पचेरन्। पचेथाः। पचेयाथाम्। पचेध्वम्। पचेय। पचेवहि। पचेमहि। {उदा.– पाचकः स्वास्थ्यकरं भोज्यं पचेत्।}

प्लवेत। प्लवेयाताम्। प्लवेरन्। प्लवेथाः। प्लवेयाथाम्। प्लवेध्वम्। प्लवेय। प्लवेवहि। प्लवेमहि। {उदा.– यूयं गभीरायां नद्यां न प्लवेध्वम्।}

मार्गेत्। मार्गेताम्। मार्गेयुः। मार्गेः। मार्गेतम्। मार्गेत। मार्गेयम्। मार्गेव। मार्गेम। {उदा.– ब्रह्मचारी प्रतिदिनं भिक्षां मार्गेत्। अनापदि कः अपि कम् अपि किम् अपि न मार्गेत्।}

जपेत्। जपेताम्। जपेयुः। जपेः। जपेतम्। जपेत। जपेयम्। जपेव। जपेम। {उदा.– ब्राह्मणः प्रतिदिनं गायत्रीं जपेत्।}

स्नायात्। स्नायाताम्। स्नायुः। स्नायाः। स्नायातम्। स्नायात। स्नायाम्। स्नायाव। स्नायाम। {उदा.– स्वस्थाः जनाः प्रतिदिनं स्नायुः।}

जुहुयात्। जुहुयाताम्। जुहुयुः। जुहुयाः। जुहुयातम्। जुहुयात। जुहुयाम्। जुहुयाव। जुहुयाम। {उदा.– श्रद्धालू युवाम् देवेभ्यः प्रतिदिनं हविः जुहुयातम्।}

दीव्येत्। दीव्येताम्। दीव्येयुः। दीव्येः। दीव्येतम्। दीव्येत। दीव्येयम्। दीव्येव। दीव्येम। {उदा.– जनाः कदाऽपि अक्षैर् न दीव्येयुः। त्वम् पाशकैः कदापि न दीव्येः।}

सुन्वीत। सुन्वीयाताम्। सुन्वीरन्। सुन्वीथाः। सुन्वीयाथाम्। सुन्वीध्वम्। सुन्वीय। सुन्वीवहि। सुन्वीमहि। {उदा.– विधिना वेदमधीतवन्तः समृद्धाः शुद्धकुलीनाः ब्राह्मणाः स्वशास्त्रम् अनुसृत्य सोमं सुन्वीरन्।}

क्षिपेत्। क्षिपेताम्। क्षिपेयुः। क्षिपेः। क्षिपेतम्। क्षिपेत। क्षिपेयम्। क्षिपेव। क्षिपेम। क्षिपेत। क्षिपेयाताम्। क्षिपेरन्। क्षिपेथाः। क्षिपेयाथाम्। क्षिपेध्वम्। क्षिपेय इ.। {उदा.– नागरिकाः रथ्यासु अवकरं न क्षिपेयुः।}

रुन्ध्यात्। रुन्ध्याताम्। रुन्ध्युः। रुन्ध्याः। रुन्ध्यातम्। रुन्ध्यात। रुन्ध्याम्। रुन्ध्याव। रुन्ध्याम। रुन्धीत। रुन्धीयाताम्। रुन्धीरन्। रुन्धीथाः। रुन्धीयाथाम्। रुन्धीध्वम् इ.। {उदा.– अहं परकार्यं कदाऽपि न रुन्ध्याम्।}

कुर्यात्। कुर्याताम्। कुर्युः। कुर्याः। कुर्यातम्। कुर्यात। कुर्याम्। कुर्याव। कुर्याम। कुर्वीत। कुर्वीयाताम्। कुर्वीरन्। कुर्वीथाः। कुर्वीयाथाम्। कुर्वीध्वम्। कुर्वीय इ.। {उदा.– छात्राः अध्ययने परिश्रमं कुर्वीरन्।}

गृह्णीयात्। गृह्णीयाताम्। गृह्णीयुः। गृह्णीयाः। गृह्णीयातम्। गृह्णीयात। गृह्णीयाम्। गृह्णीयाव। गृह्णीयाम। गृह्णीत। गृह्णीयाताम्। गृह्णीरन् इ.। {उदा.– साधुः जनः अदत्तं परद्रव्यं कदाऽपि न गृह्णीयात्।}

मानयेत्। मानयेताम्। मानयेयुः। मानयेः। मानयेतम्। मानयेत। मानयेयम्। मानयेव। मानयेम। मानयेत। मानयेयाताम्। मानयेरन्। मानयेथाः। मानयेयाथाम्। मानयेध्वम्। मानयेय इ.। {उदा.– वयं गुरुं मानयेम।}

एकार्थीभावाय द्वयोः पदयोर् बहूनां वा पदानामेकपदीकरणं समास इत्युच्यते। समासः पञ्चविधो भवति– केवलसमासः, अव्ययीभावसमासः, तत्पुरुषसमासः, बहुव्रीहिसमासः, द्वन्द्वसमासश् चेति। तत्र अव्ययीभाव-तत्पुरुष-बहुव्रीहि-द्वन्द्व-समासाः सुप्रसिद्धाः सन्ति।

### अव्ययीभावसमासः

सर्वैः यथा-शक्ति कार्यं कर्तव्यम्।
मनुष्येण प्रति-दिनम् उद्यमः कर्तव्यः।
विद्यार्थिनः यथा-क्रमम् अवतिष्ठेरन्।
बालकेभ्यः प्रत्येकं त्रीणित्रीणि फलानि देहि।
बालकाः प्रति-पञ्चाहं नखान् निकृन्तेयुः।

### तत्पुरुषसमासः

राज-पुरुषः चौरं निगृह्णाति।
पुस्तका-ऽऽलयस्य स्थापनं संरक्षणं च कर्तव्यम्।
विद्या-ऽभ्यासेन बुद्धिः वर्धते।
भानु-भक्त आचार्यः नेपाल-देशे राम-चरित्रं प्रचारयामास।
विद्या-ऽर्थिनः विद्या-ऽऽलये पठित्वा विद्या-सम्पन्नाः भवन्ति।

### बहुव्रीहिसमासः

सु-चरित्राणां जनानां सम्मानः भवति।
बहु-व्रीहिः मनुष्यः बुभुक्षितः न तिष्ठति।
बहु-व्रीहिः मनुष्यः दरिद्रेभ्यः अन्नं ददाति।
शुक्ला-ऽम्बरः जनः सभायां शोभते।
मलिना-ऽम्बरः जनः सभायां न शोभते।
नेपालदेशे वीर-पुरुषकाः ग्रामाः बहवः सन्ति।

### द्वन्द्वसमासः

राम-श्यामौ सुशीलौ स्तः।
पशु-पक्षिणौ पालयितव्यौ।

**एकस्मिन् वृक्षे हंस-काकौ निवसतः स्म।**
**राम-लक्ष्मणौ वनं जग्मतुः।**
**द्यूते पराजिताः भूत्वा युधिष्ठिर-भीमा-ऽर्जुन-नकुल-सहदेवाः वनं जग्मुः।**
**ब्रह्म-विष्णु-महेश्वराः पूजयितव्याः।**
**पिता-पुत्रौ ग्रामं गच्छतः।**
**माता राम-श्यामौ विह्वयते।**
**अहमपि राम-श्यामाभ्यां सह खेलितुं गच्छामि।**
**अद्य प्रधानाध्यापकः राम-श्यामाभ्यां पारितोषिकम् अदात्।**
**कुक्कुरः राम-श्यामाभ्याम् अदरयत्।**
**राम-श्यामयोः गृहं विद्यालयात् दूरे वर्तते।**
**अम्बा राम-श्यामयोः दयां करोति।**

द्विगुरपि सद्वन्द्वोऽहं गृहे च मे सततमव्ययीभावः।
तत् पुरुष कर्म धारय येनाऽहं स्यां बहुव्रीहिः॥

१. उदाहरणे प्रदर्शितया रीत्या विग्रहवाक्याणि प्रदर्शयत–

यथा-क्रमम्। यथा-रुचि।
यथा-शक्ति। यथा-सम्भवम्।
प्रति-दिनम्। प्रति-पञ्चाहम्।
प्रत्येकम्। प्रति-वर्षम्।

{उदा.– शक्तिमनतिक्रम्य= यथा-शक्ति, दिनं दिनं प्रति= प्रति-दिनम्}।

राज-पुरुषः। विद्या-ऽर्थी।
पुस्तका-ऽऽलयः। राज-प्रासादः।
राम-चरित्रम्। औषधा-ऽऽलयः।
विद्या-ऽऽलयः। कृष्ण-चरित्रम्।

{उदा.– राज्ञः पुरुषः= राज-पुरुषः}।

सु-चरित्राः। दुश्-चरित्राः।
बहु-व्रीहिः। बहु-धनः।
शुक्ला-ऽम्बरः। पीता-ऽम्बरः।
वीर-पुरुषकः। प्राप्त-जलः।

{उदा.– शोभनं चरित्रं येषां ते= सु-चरित्राः}।

राम-श्यामौ। ब्रह्म-विष्णु-महेश्वराः।
हंस-काकौ। राम-लक्ष्मण-भरत-शत्रुघ्नाः।
माता-पितरौ। राम-कृष्ण-प्रद्युम्नाः।
सीता-रामौ। युधिष्ठिर-भीमा-ऽर्जुन-नकुल-सहदेवाः।

{उदा.– रामश्च श्यामश्च= राम-श्यामौ}।

**परमात्मा युष्मान् रक्ष्यात्।**

**तव गृहे समृद्धिः भूयात्।**
**विद्यार्थिनः विद्वांसः भूयासुः।**
**बालकः सुखेन खेल्यात्।**
**छात्राः दुर्गुणान् त्यज्यासुः।**
**तव विद्या प्रतिदिनं वर्धिषीष्ट।**
**त्वं सदा प्रमुदितः सन् हस्याः।**
**तव उद्याने सुन्दराणि फुल्लानि फुल्ल्यासुः।**
**वयं बहु अन्नं पच्यास्म।**
**बालकाः रम्यं नाटकं प्रेक्षिषीरन्।**
**त्वं सदा एव रम्याणि उपाख्यानानि श्रूयाः।**
**राजा शत्रून् जीयात्।**
**विद्यार्थिनः सम्यक् अध्येषीरन्।**
**त्वं सम्यक् अध्येषीष्ठाः।**
**अहं सम्यक् अध्येषीय।**
**त्वं विद्यायाः पारं यायाः।**
**त्वं देवेभ्यः हविः हूयाः।**
**आवां सखीभिः सह मिल्यास्व।**
**त्वं बहु यशः तन्याः।**
**युष्माकं धनं कदापि चौरः न चोर्यात्।**
**त्वं सुन्दराणि लग्नानि लग्याः।**
**तव गृहे जनाः अन्यायेन परिजनान् कर्म न कार्यासुः।**
**तव पुत्राः कुलस्य उत्कर्षाय कर्म चिकीर्ष्यासुः।**

वर्धिषीष्ठाः स्वजातेषु वध्यास् त्वं रिपुसंहतीः।
भूयास् त्वं गुणिनां मान्यस् तेषां स्थेया व्यवस्थितौ॥
धेयास् त्वं सुहृदां प्रीतिं वन्दिषीष्ठा दिवौकसः।
सोमं पेयाश् च हेयाश्च हिंस्रा हानिकरीः क्रियाः॥

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

(क)

| | | |
|---|---|---|
| बालकः<br>पुत्रौ<br>विद्यार्थिनः<br>त्वम्<br>युवाम्<br>यूयम्<br>अहम्<br>आवाम्<br>वयम् | कुशलः<br>सफलौ<br>स्वस्थः<br>धनिनः<br>विद्वान्<br>सुखी<br>सुखिनौ<br>सुखिनः | भूयात्<br>भूयास्ताम्<br>भूयासुः<br>भूयाः<br>भूयास्तम्<br>भूयास्त<br>भूयासम्<br>भूयास्व<br>भूयास्म |

(ख)

| | | |
|---|---|---|
| बालिका<br>बालिके<br>भगिन्यौ<br>बालिकाः<br>त्वम्<br>युवाम्<br>यूयम्<br>अहम्<br>आवाम्<br>वयम् | समये<br>सुखशय्यायाम्<br>सुखेन<br>सुन्दरे शयने<br>नवीनायां शय्यायाम् | शयिषीष्ट<br>शयिषीयास्ताम्<br>शयिषीरन्<br>शयिषीष्ठाः<br>शयिषीयास्थाम्<br>शयिषीढ्वम्<br>शयिषीय<br>शयिषीवहि<br>शयिषीमहि |

२. अधोलिखितानि आशीर्लिङ्लकारान्तानि क्रियापदानि प्रयुज्य वाक्यानि रचयितव्यानि–

दृश्यात्। दृश्यास्ताम्। दृश्यासुः। दृश्याः। दृश्यास्तम्। दृश्यास्त। दृश्यासम्। दृश्यास्व। दृश्यास्म। {उदा.– त्वं सुन्दराणि दृश्यानि दृश्याः।}

जीव्यात्। जीव्यास्ताम्। जीव्यासुः। जीव्याः। जीव्यास्तम्। जीव्यास्त। जीव्यासम्। जीव्यास्व। जीव्यास्म। {उदा.– परमात्मनः अनुग्रहेण त्वं चिरं जीव्याः।}

वर्धिषीष्ट। वर्धिषीयास्ताम्। वर्धिषीरन्। वर्धिषीष्ठाः। वर्धिषीयास्थाम्। वर्धिषीध्वम्। वर्धिषीय। वर्धिषीवहि। वर्धिषीमहि। {उदा.– यूयम् उद्यमेन वर्धिषीध्वम्।}

ईक्षिषीष्ट। ईक्षिषीयास्ताम्। ईक्षिषीरन्। ईक्षिषीष्ठाः। ईक्षिषीयास्थाम्। ईक्षिषीध्वम्। ईक्षिषीय। ईक्षिषीवहि। ईक्षिषीमहि। {उदा.– यूयं मयूरस्य रुचिरं नृत्यं प्रेक्षिषीध्वम्।}

अध्येषीष्ट। अध्येषीयास्ताम्। अध्येषीरन्। अध्येषीष्ठाः। अध्येषीयास्थाम्। अध्येषीढ्वम्। अध्येषीय। अध्येषीवहि। अध्येषीमहि। {उदा.– छात्राः वेदान् अध्येषीरन्।}

देयात्। देयास्ताम्। देयासुः। देयाः। देयास्तम्। देयास्त। देयासम्। देयास्व। देयास्म। दासीष्ट। दासीयास्ताम्। दासीरन् इ.। {उदा.– त्वं दरिद्रेभ्यः अन्नं देयाः।}

नश्यात्। नश्यास्ताम्। नश्यासुः। नश्याः। नश्यास्तम्। नश्यास्त। नश्यासम्। नश्यास्व। नश्यास्म। {उदा.– शास्त्राध्ययनेन युष्माकम् अज्ञानं नश्यात्।}

आप्यात्। आप्यास्ताम्। आप्यासुः। आप्याः। आप्यास्तम्। आप्यास्त। आप्यासम्। आप्यास्व। आप्यास्म। {उदा.– परिश्रमिणः परिश्रमस्य फलं प्राप्यासुः।}

मिल्यात्। मिल्यास्ताम्। मिल्यासुः। मिल्याः। मिल्यास्तम्। मिल्यास्त। मिल्यासम्। मिल्यास्व। मिल्यास्म। मेलिषीष्ट। मेलिषीयास्ताम्। मेलिषीरन्। मेलिषीष्ठाः। मेलिषीयास्थाम् इ.। {उदा.– त्वं मित्रैः सह शीघ्रं मिल्याः।}

रुध्यात्। रुध्यास्ताम्। रुध्यासुः। रुध्याः। रुध्यास्तम्। रुध्यास्त। रुध्यासम्। रुध्यास्व। रुध्यास्म। रुत्सीष्ट। रुत्सीयास्ताम्। रुत्सीरन् इ.। {उदा.– युवयोः प्रगतेः मार्गं लोभ-मोहौ न रुध्यास्ताम्।}

तन्यात्। तन्यास्ताम्। तन्यासुः। तन्याः। तन्यास्तम्। तन्यास्त। तन्यासम्। तन्यास्व। तन्यास्म। तनिषीष्ट। तनिषीयास्ताम्। तनिषीरन् इ.। {उदा.– तव कृतिः तव कीर्तिं वितन्यात्।}

ज्ञायात्। ज्ञायास्ताम्। ज्ञायासुः। ज्ञायाः। ज्ञायास्तम्। ज्ञायास्त। ज्ञायासम्। ज्ञायास्व। ज्ञायास्म। ज्ञेयात्। ज्ञेयास्ताम्। ज्ञेयासुः। ज्ञेयाः। ज्ञेयास्तम्। ज्ञेयास्त। ज्ञेयासम् इ.। {उदा.– अध्येतारः शास्त्रार्थं सम्यग् ज्ञायासुः।}

चोर्यात्। चोर्यास्ताम्। चोर्यासुः। चोर्याः। चोर्यास्तम्। चोर्यास्त। चोर्यासम्। चोर्यास्व। चोर्यास्म। चोरयिषीष्ट। चोरयिषीयास्ताम्। चोरयिषीरन् इ.। {उदा.–युष्माकं धनं कदाऽपि चोरः न चोर्यात्।}

**यूयम् ऋक्षं नैव छुपत।**

**छात्रः परिश्रमी भवतु।**
**छात्रः स्वस्थः भवतात्।**
**बालकः अङ्गने खेलतु।**
**ऋषभौ धुरं वहताम्।**
**छात्राः सम्यक् पठन्तु।**
**त्वं व्यर्थं न हस।**
**त्वं सुखी भवतात्।**
**युवां शीघ्रं विद्यालयं गच्छतम्।**
**त्वं तथा न आक्रोश।**
**बालकाः इक्षुं खादन्तु।**
**त्वं क्षणं तत्रैव अवतिष्ठस्व।**
**अहं सावधानः भवानि।**
**आवां मेलनशीलौ भवाव।**
**वयं परिश्रमिणः भवाम।**
**त्वम् एतस्यां शय्यायां शेष्व।**
**त्वं भ्रात्रे कलमं देहि।**
**यूयम् अस्मात् कुक्कुरात् न बिभित।**
**विद्यार्थिनः गुरून् प्रश्नं पृच्छन्तु।**
**छात्राः स्वकार्यं स्वयं कुर्वन्तु।**
**यूयं विद्यालयस्य वृत्तान्तं कथयत।**
**छात्राः उद्यानस्य पुष्पाणि न त्रोटयन्तु।**

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।
अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात् पथः प्रविचलन्ति पदं न धीराः।।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु माऽस्तु कोऽपीह दुःखभाक्।।

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

(क)

| | | |
|---|---|---|
| छात्रः<br>छात्रौ<br>छात्राः<br>त्वम्<br>युवाम्<br>यूयम्<br>अहम्<br>आवाम्<br>वयम् | सम्यक् | पठतु<br>पठतात्<br>पठताम्<br>पठन्तु<br>पठ<br>पठतात्<br>पठतम्<br>पठत<br>पठानि<br>पठाव<br>पठाम |

(ख)

| | | |
|---|---|---|
| उद्यमशीलः जनः<br>परिश्रमिणौ पुत्रौ<br>अनुशिष्टाः छात्राः<br>त्वम्<br>युवाम्<br>यूयम्<br>अहम्<br>आवाम्<br>वयम् | यशसा<br>विद्यया<br>वृत्तेन<br>वित्तेन | वर्धताम्<br>वर्धेताम्<br>वर्धन्ताम्<br>वर्धस्व<br>वर्धेथाम्<br>वर्धध्वम्<br>वर्धे<br>वर्धावहै<br>वर्धामहै |

२. अधोलिखितानि लोट्लकारान्तानि पदानि प्रयुज्य वाक्यानि रचयितव्यानि–

अटतु-अटतात्। अटताम्। अटन्तु। अट-अटतात्। अटतम्। अटत। अटानि। अटाव। अटाम। {उदा.– छात्राः नगरे न पर्यटन्तु।}

जपतु-जपतात्। जपताम्। जपन्तु। जप-जपतात्। जपतम्। जपत। जपानि। जपाव। जपाम। {उदा.– यूयं गुरूपदिष्टं मन्त्रं जपत।}

जिघ्रतु-जिघ्रतात्। जिघ्रताम्। जिघ्रन्तु। जिघ्र-जिघ्रतात्। जिघ्रतम्। जिघ्रत। ज़िघ्राणि। जिघ्राव। जिघ्राम। {उदा.– वयं सुगन्धीनि पुष्पाणि जिघ्राम।}

अधीताम्। अधीयाताम्। अधीयताम्। अधीष्व। अधीयाथाम्। अधीध्वम्। अध्ययै। अध्ययावहै। अध्ययामहै। {उदा.– वयं वेदम्अध्ययामहै।}

ददातु-दत्तात्। दत्ताम्। ददतु। देहि-दत्तात्। दत्तम्। दत्त। ददानि। ददाव। ददाम। दत्ताम्। ददाताम्। ददताम्। दत्स्व। ददाथाम्। दद्ध्वम्। ददै। ददावहै। ददामहै। {उदा.– धनिनः दरिद्रेभ्यः अन्नं ददतु।}

अस्यतु-अस्यतात्। अस्यताम्। अस्यन्तु। अस्य-अस्यतात्। अस्यतम्। अस्यत। अस्यानि। अस्याव। अस्याम। {उदा.– नागरिकाः रथ्यायाम् अवकरं न प्रास्यन्तु।}

स्पृशतु-स्पृशतात्। स्पृशताम्। स्पृशन्तु। स्पृश-स्पृशतात्। स्पृशतम्। स्पृशत। स्पृशानि। स्पृशाव। स्पृशाम। {उदा.– युवां भल्लूकं नैव स्पृशतम्।}

भनक्तु-भङ्क्तात्। भङ्क्ताम्। भञ्जन्तु। भङ्ग्धि-भङ्क्तात्। भङ्क्तम्। भङ्क्त। भनजानि। भनजाव। भनजाम। {उदा.– छात्राः मञ्चान् न भञ्जन्तु।}

करोतु-कुरुतात्। कुरुताम्। कुर्वन्तु। कुरु-कुरुतात्। कुरुतम्। कुरुत। करवाणि। करवाव। करवाम। कुरुताम्। कुर्वाताम्। कुर्वताम् इ.। {उदा.– यूयं गृहकार्यं कुरुत।}

गृह्णातु-गृह्णीतात्। गृह्णीताम्। गृह्णन्तु। गृहाण-गृह्णीतात्। गृह्णीतम्। गृह्णीत। गृह्णानि। गृह्णाव। गृह्णाम। गृह्णीताम्। गृह्णाताम्। गृह्णताम् इ.। {उदा.– त्वम् एतद् वस्तु गृहाण।}

क्षालयतु-क्षालयतात्। क्षालयताम्। क्षालयन्तु। क्षालय-क्षालयतात्। क्षालयतम्। क्षालयत। क्षालयानि। क्षालयाव। क्षालयाम। क्षालयताम्। क्षालयेताम्। क्षालयन्ताम् इ.। {उदा.– अहं फलानि प्रक्षालयानि।}

कण्डूयतु-कण्डूयतात्। कण्डूयताम्। कण्डूयन्तु। कण्डूय-कण्डूयतात्। कण्डूयतम्। कण्डूयत। कण्डूयानि। कण्डूयाव। कण्डूयाम। कण्डूयताम्। कण्डूयेताम्। कण्डूयन्ताम् इ.। {उदा.– त्वं व्रणं न कण्डूय।}

# सौरमण्डलम्

आकाशेऽनेके प्रकाशमानाः पिण्डा दृश्यन्ते। ते द्विविधाः सन्ति। केषाञ्चन पिण्डानामात्मनः प्रकाशोऽस्ति। केषाञ्चन पिण्डानामात्मनः प्रकाशो नास्ति। येषां पिण्डानामात्मन एव प्रकाशो भवति, ते पिण्डास् "तारकाः" इति कथ्यन्ते। येषां पिण्डानामात्मनः प्रकाशो न भवति, किन्तु सूर्यस्य तारकाणां वा प्रकाशेन प्रकाशन्ते ते "ग्रहाः" इत्युच्यन्ते। एतत्परिभाषानुसारं सूर्योऽप्येका तारकैव वर्तते। तथापि स पृथग् गण्यते। मङ्गल-बुध-बृहस्पति-शुक्र-शनैश्चराः सर्वेऽपि सूर्यस्य प्रकाशेनैव प्रकाशन्ते। अतस् ते ग्रहा इत्युच्यन्ते।

सूर्यसम्बद्धं वस्तु सौरमुच्यते। मण्डलम् इति वृन्दम् (कदम्बकम्) उच्यते। सौराणां ग्रहाणामुपग्रहाणां च मण्डलं सौरमण्डलमिति व्यवह्रियते। अस्माकं सौरमण्डले प्रमुखा नव ग्रहाः सन्ति। एते सर्वे ग्रहाः सूर्यस्य परिक्रमणं कुर्वन्ति। ते ग्रहाः सूर्यं परितोऽनेन क्रमेण निविष्टाः सन्ति– बुधः, शुक्रः, पृथ्वी, मङ्गलः, बृहस्पतिः, शनैश्चरः, अरुणः, वरुणः, यमश् चेति। अरुण-वरुण-यमा आधुनिके काल एव ज्ञाता ग्रहाः सन्ति। बुध-शुक्र-मङ्गलादयो ग्रहास् ताराग्रहा इत्यप्युच्यन्ते। सौरमण्डलेऽनेके धूमकेतवोऽपि सन्ति। ते सर्वदा द्रष्टुं न शक्यन्ते, कदाचिदेव रात्रौ ते दृष्टिपथमायान्ति।

ग्रहेषु बृहस्पतिग्रहः स्थूलतमो बुधग्रहश् च लघुतमो वर्तते। दूरवीक्षणेन विलोकने शनैश्चरं परितः स्थित एको मनोहररूपो वलयो दृष्टिपथमायाति। अतो ग्रहेषु मध्ये स विलक्षणोऽस्ति। बुधादयो ग्रहा रात्र्यामेव दृश्यन्ते। शुक्रग्रहस् तु कदा चिद् दिवाऽपि द्रष्टुं शक्यते। अरुण-वरुण-यमा दूरवीक्षणेनैव द्रष्टुं शक्यन्ते। अरुणस् तीक्ष्णदृष्टिकैर् जनैस् तु दूरवीक्षणं विनाऽपि द्रष्टुं शक्यत इति वदन्ति।

सूर्यपरिमाणं पृथ्वीपरिमाणापेक्षयाऽनेकलक्षगुणमस्ति। सूर्योऽतीवोष्णश् चाऽस्ति। सूर्यस्य हेतोरेव पृथिवीस्थानां जीवानां जीवनं संरक्षितं वर्तते। अतः सूर्यस्य महत्त्वम् अतीव प्रभूतं वर्तते। एवमेव सौरमण्डलस्य ग्रहेषु चन्द्रस्य महत्त्वमपि बह्वेवाऽस्ति। यथा पृथ्व्यादयो ग्रहाः सूर्यं परितो भ्रमन्ति तथैव चन्द्रमाः पृथ्वीं परितो भ्रमति। अतश् चन्द्रमा इदानीं खगोलज्ञैः पृथिव्या उपग्रहः कथ्यते। पृथिव्या एक एवोपग्रहश् चन्द्रमा वर्तते। चन्द्रमसोऽस्माभिर् दृश्यः प्रकाशयुतो भागः शुक्लपक्षे वर्धते, कृष्णपक्षेऽपक्षीयते। मङ्गल-बृहस्पति-शनैश्चरा-ऽरुण-वरुणानामपि उपग्रहाः सन्ति।

वैदिकानां धार्मिके व्यवहारे मुख्यतया चन्द्रमसो विचारेणैव मासस्य गणना भवति। दैवकार्याणि चन्द्रमसि वर्धमाने कर्तव्यानीति धर्मशास्त्रव्यवस्था वर्तते। वैदिकानां वर्षस्य, अयनयोः, ऋतूनां च गणनाऽपि मुख्यतया चान्द्रैर् मासैरेव भवति। तत्र सायन-सौरऋतुभिः समन्वयं स्थापयितुमधिकमासस्य व्यवस्था च कृताऽस्ति। वेदाङ्गज्योतिषा-ऽनुसारमयनान्ते आषाढे पौष एव चाऽधिमासो भवति। वैदिकनववर्षारम्भस् तपश्शुक्ल-प्रतिपदि भवति। दृक्सिद्धं सौरमुत्तरायणारम्भं विचार्य तपश्शुक्लप्रतिपद् निर्णीयते।

चन्द्रः सूर्यस्य किरणैः प्रकाशत इत्यस्माकं पूर्वजैरमुहूर्त्येव ज्ञातमासीत्। एष विषयो महाकविना कालिदासेन रघुवंशमहाकाव्येऽपीत्थं सूचितोऽस्ति–

पितुः प्रयत्नात् स समग्रसम्पदः शुभैः शरीरावयवैर् दिनेदिने।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः॥ (३।२२) इति।

इदानीं चन्द्रमा अपि जनानां कृते गम्यो जातोऽस्ति। बहवो मनुष्याश् चन्द्रमसं गतवन्तः सन्ति। तेषु प्रथमो नील्-आर्म्-स्ट्रङ्-नामकोऽमेरिकादेशवास्तव्यो मनुष्यो वर्तते। अन्येषु ग्रहेषूपग्रहेषु चाऽद्यपर्यन्तं कोऽपि मनुष्यो गतो नाऽस्ति। इदानीं मङ्गलस्य विषये-ऽन्वेषणं विशेषेण क्रियमाणं वर्तते।

१. अधस्तनानां प्रश्नानामुत्तराणि लिखत–

(क) कीदृशाः पिण्डा ग्रहा इत्युच्यन्ते?
(ख) कीदृशाः पिण्डास् तारका इत्युच्यन्ते?
(ग) प्रसिद्धा नव ग्रहाः के?
(घ) ग्रहेषु स्थूलतमो ग्रहः कः? कश् च लघुतमो ग्रहः?
(ङ) सूर्यस्य महत्त्वं किम्?
(च) किं शुक्लपक्षे वर्धते? कृष्णपक्षेऽपक्षीयते च?
(छ) चन्द्रः कथं प्रकाशते?
(ज) महाकविना कालिदासेन रघुवंशे चन्द्रमसो विषये किं सूचितमस्ति?
(झ) चन्द्रमसं गतवान् प्रथमः पुरुषः कोऽस्ति?

**यदि अहम् कुक्कुरात् अभेष्यम् तर्हि पलायिष्ये।**

**यदि चौरः आगमिष्यत् तर्हि कुक्कुरः अबुक्किष्यत्।**
**यदि पक्षिणः व्याधम् अद्रक्ष्यन् तर्हि ते उदडयिष्यन्त।**
**यदि बालकाः प्रसन्नाः अभविष्यन् तर्हि ते अहसिष्यन्।**
**यदि युवां पुष्पविटपान् असेक्ष्यतम् तर्हि ते अफुल्लिष्यन्।**
**यदि बालकः सावधानः न अभविष्यत् तर्हि अग्निः तस्य हस्तम् अप्लोषिष्यत्।**
**यदि भ्रातरौ अत्र अभविष्यताम् तर्हि तौ अपि पायसम् अखादिष्यताम्।**
**यदि पुष्परोपणसमयः अभविष्यत् तर्हि मालाकारः पुष्पवाटीमखनिष्यत्।**
**यदि शकटः पुराणः न अभविष्यत् तर्हि सः सम्यक् अचलिष्यत्।**
**यदि अहम् अपि तिर्यक्सङ्ग्रहालयम् अगमिष्यम् तर्हि अहम् अपि वनमानुषं प्रैक्षिष्ये।**
**यदि रामः अत्र आयास्यत् तर्हि सः अपि मया सह अखेलिष्यत्।**
**यदि शिशुः बुभुक्षितः अभविष्यत् तर्हि सः अरोदिष्यत्।**
**यदि प्रातःकालः अभविष्यत् तर्हि कुक्कुटाः अवाशिष्यन्त।**
**यदि गौरी नर्तनकुशला अभविष्यत् तर्हि सा अपि स्वागतकार्यक्रमे अनर्त्स्यत्।**
**यदि आवां विद्यालयं गन्तुम् अशक्ष्याव तर्हि सखिभिः सह अमेलिष्याव।**
**यदि मम नखाः अवर्धिष्यन्त तर्हि तान् अहं न्यकर्तिष्यम्।**
**यदि अहं स्वस्थः अभविष्यम् तर्हि सर्वाणि कार्याणि अकरिष्यम्।**
**यदि अहम् अस्य प्रश्नस्य उत्तरम् अज्ञास्यम् तर्हि अकथयिष्यम्।**
**यदि वयम् उपद्रवम् अकरिष्याम तर्हि पितामही अस्मान् अताडयिष्यत्।**
**यदि ब्राह्मणाः सदाचारपरायणाः अभविष्यन् तर्हि लोकः तान् अमानयिष्यत्।**

सत्कुलजे विद्वत्त्वं विदुषि धनं धनिनि दानसम्भोगौ।
इति नियमानकरिष्यद् यद्यभविष्यद् विधिः स्वस्थः॥

१. अधोलिखितानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | | | | | |
|---|---|---|---|---|---|---|
| | पुत्रः | | अध्यैष्यत | | ज्ञानी | अभविष्यत् |
| | भ्रातरौ | | अध्यैष्येताम् | | ज्ञानिनौ | अभविष्यताम् |
| | विद्यार्थिनः | | अध्यैष्यन्त | | ज्ञानिनः | अभविष्यन् |
| | त्वम् | | अध्यैष्यथाः | | विद्वान् | अभविष्यः |
| यदि | युवाम् | सम्यक् | अध्यैष्येथाम् | तर्हि | परीक्षायामुत्तीर्णः | अभविष्यतम् |
| | यूयम् | | अध्यैष्यध्वम् | | सम्मानितः | अभविष्यत |
| | अहम् | | अध्यैष्ये | | पण्डितौ | अभविष्यम् |
| | आवाम् | | अध्यैष्यावहि | | पण्डिताः | अभविष्याव |
| | वयम् | | अध्यैष्यामहि | | | अभविष्याम |

२. अधस्तनानि लृङ्लकारान्तानि क्रियापदानि प्रयुज्य वाक्यानि रचयितव्यानि–

अद्रक्ष्यत्। अद्रक्ष्यताम्। अद्रक्ष्यन्। अद्रक्ष्यः। अद्रक्ष्यतम्। अद्रक्ष्यत। अद्रक्ष्यम्। अद्रक्ष्याव। अद्रक्ष्याम। {उदा.– यदि अहं पुष्करिण्यां कमलानि अद्रक्ष्यम् तर्हि मम मनः अरंस्यत।}

पलायिष्यत। पलायिष्येताम्। पलायिष्यन्त। पलायिष्यथाः। पलायिष्येथाम्। पलायिष्यध्वम्। पलायिष्ये। पलायिष्यावहि। पलायिष्यामहि। {उदा.– यदि मृगः व्याधम् अद्रक्ष्यत् तर्हि सः पलायिष्यत।}

आत्स्यत्। आत्स्यताम्। आत्स्यन्। आत्स्यः। आत्स्यतम्। आत्स्यत। आत्स्यम्। आत्स्याव। आत्स्याम। {उदा.– यदि युवां समये आगमिष्यतम् तर्हि युवाम् अपि क्षैरेयम्आत्स्यतम्।}

अदास्यत्। अदास्यताम्। अदास्यन्। अदास्यः। अदास्यतम्। अदास्यत। अदास्यम्। अदास्याव। अदास्याम। अदास्यत इ.। {उदा.– रमायाः पार्श्वे यदि रूप्यकाणि अभविष्यन् तर्हि सा मार्गणाय एकं रूप्यकम् अदास्यत्।}

अनशिष्यत्। अनशिष्यताम्। अनशिष्यन्। अनशिष्यः। अनशिष्यतम्। अनशिष्यत। अनशिष्यम्। अनशिष्याव। अनशिष्याम। अनङ्क्ष्यत्। अनङ्क्ष्यताम्। अनङ्क्ष्यन्। अनङ्क्ष्यः। अनङ्क्ष्यतम्। अनङ्क्ष्यत। अनङ्क्ष्यम्। अनङ्क्ष्याव। अनङ्क्ष्याम। {उदा.–यदि अहं सावधानः नाऽभविष्यम् तर्हि विपण्याम् अनशिष्यम्।}

अकरिष्यत्। अकरिष्यताम्। अकरिष्यन्। अकरिष्यः। अकरिष्यतम्। अकरिष्यत। अकरिष्यम्। अकरिष्याव। अकरिष्याम। अक रिष्यत। अक रिष्येताम् इ.। {उदा.– यदि अहं समर्थः अभविष्यम् तर्हि एतत् कार्यम् अकरिष्यम्।}

अज्ञास्यत्। अज्ञास्यताम्। अज्ञास्यन्। अज्ञास्यः। अज्ञास्यतम्। अज्ञास्यत। अज्ञास्यम्। अज्ञास्याव। अज्ञास्याम। {उदा.– यदि छात्राः गुरुणा उक्तं सम्यक् अश्रोष्यन् तर्हि ते श्लोकस्य अर्थं सम्यक् अज्ञास्यन्।}

अचोरयिष्यत्। अचोरयिष्यताम्। अचोरयिष्यन्। अचोरयिष्यः। अचोरयिष्यतम्। अचोरयिष्यत। अचोरयिष्यम्। अचोरयिष्याव। अचोरयिष्याम। अचोरयिष्यत। अचोरयिष्येताम्। अचोरयिष्यन्त इ.। {उदा.– यदि वयम् दुष्टाः अभविष्याम, तर्हि परस्य वस्तूनि अचोरयिष्याम।}

अकण्डूयिष्यत्। अकण्डूयिष्यताम्। अकण्डूयिष्यन्। अकण्डूयिष्यः। अकण्डूयिष्यतम्। अकण्डूयिष्यत। अकण्डूयिष्यम्। अकण्डूयिष्याव। अकण्डूयिष्याम। अकण्डूयिष्यत। अकण्डूयिष्येताम्। अकण्डूयिष्यन्त। अकण्डूयिष्यथाः। अकण्डूयिष्येथाम्। अकण्डूयिष्यध्वम्। अकण्डूयिष्ये। अकण्डूयिष्यावहि। अकण्डूयिष्यामहि। {उदा.– यदि तव पादे कण्डूतिः अभविष्यत् तर्हि त्वम् पादम् अकण्डूयिष्यः।}

## कर्मवाच्यक्रियापदप्रयोगाः भाववाच्यक्रियापदप्रयोगाश्च

| कर्तृवाच्यक्रियापदप्रयोगाः | कर्मवाच्यक्रियापदप्रयोगाः |
|---|---|
| **कुमारी श्लोकं पठति।** | **कुमार्या श्लोकः पठ्यते।** |
| **कुमारौ श्लोकं पठतः।** | **कुमाराभ्यां श्लोकः पठ्यते।** |
| **कुमाराः मिलित्वा श्लोकं पठन्ति।** | **कुमारैः मिलित्वा श्लोकः पठ्यते।** |
| **भ्राता सेवं खादति।** | **भ्रात्रा सेवं खाद्यते।** |
| **बालकः कदलीफले खादति।** | **बालकेन कदलीफले खाद्येते।** |
| **किशोरः रोटिकाः खादति।** | **किशोरेण रोटिकाः खाद्यन्ते।** |
| **सुवेषं पुरुषं सुन्दरं पश्यन्ति।** | **सुवेषः पुरुषः सुन्दरः दृश्यते।** |
| **कान्तिपुरात् हिमालयशिखराणि पश्यन्ति।** | **कान्तिपुरात् हिमालयशिखराणि दृश्यन्ते।** |
| **श्रोतारः पुराणकथां शृण्वन्ति।** | **श्रोतृभिः पुराणकथा श्रूयते।** |
| **अहं पितुः भणितिं स्मरामि।** | **मया पितुः भणितिः स्मर्यते।** |
| **जनाः सत्यवादिनं जनं सज्जनं ब्रुवन्ति।** | **जनैः सत्यावादी जनः सज्जनः उच्यते।** |
| **जनाः सुकर्मणा सुफलं प्राप्नुवन्ति।** | **जनैः सुकर्मणा सुफलं प्राप्यते।** |
| **धार्मिकः जनः पापं न करोति।** | **धार्मिकेण जनेन पापं न क्रियते।** |
| **जनाः सहवासेन पुरुषस्य शीलं जानन्ति।** | **जनैः सहवासेन पुरुषस्य शीलं ज्ञायते।** |
| **पण्डिताः पुराणकथां कथयन्ति।** | **पण्डितैः पुराणकथा कथ्यते।** |
| **स्वदेशे राजानं पूजयन्ति।** | **स्वदेशे राजा पूज्यते।** |
| **विद्वांसं सर्वत्र पूजयन्ति।** | **विद्वान् सर्वत्र पूज्यते।** |

| कर्तृवाच्यक्रियापदप्रयोगाः | भाववाच्यक्रियापदप्रयोगाः |
|---|---|
| **जनः अपठनात् मूर्खः भवति।** | **जनेन अपठनात् मूर्खेण भूयते।** |
| **दरिद्राः दुःखेन जीवन्ति।** | **दरिद्रैः दुःखेन जीव्यते।** |
| **विद्यार्थिनः चत्वरे खेलन्ति।** | **विद्यार्थिभिः चत्वरे खेल्यते।** |
| **अलसाः सदमित् शेरते।** | **अलसैः सदमित् शय्यते।** |
| **सन्तोषिणः जनाः सुखेन स्वपन्ति।** | **सन्तोषिभिः जनैः सुखेन सुप्यते।** |
| **बालकाः स्वल्पेन कारणेन अपि रुदन्ति।** | **बालकैः स्वल्पेन कारणेन अपि रुद्यते।** |

अधोलिखितानि वाक्यानि वाच्यान्तरलकारान्तैः क्रियापदैः युक्तानि कृत्वा परिवर्तयत–

(क) छात्राः पाठं पठन्ति। त्वं रोटिके खादसि। त्वं कथां कथयसि। अहं गीतं न शृणोमि। अहं पितुः उपदेशं स्मरामि। आवां चलचित्रं न पश्यावः। वयं श्लोकार्थं जानीमः। यूयं किं कुरुथ?

(ख) बालकाः सुशीलाः भवन्ति। त्वं सदमित् शेषे। बालिकाः अङ्गने खेलन्ति। त्वं किन्नु हससि?

(ग) अस्माभिः पाठसारः स्मर्यते। बालकैः लोककथाः श्रूयन्ते। शिशुभिः सदा शय्यते।

यद् यस्य विहितं कर्म वेदे शास्त्रे च वैदिकैः।
तस्य तेन समाचारः सदाचारो न चेतरः॥

विद्वेषरागरहिता अनुतिष्ठन्ति यं द्विजाः।
विद्वांसस् तं सदाचारं धर्ममूलं विदुर् बुधाः॥

आचार एव धर्मस्य मूलं लोके कुलस्य च।
आचाराद् धि च्युतो जन्तुर् न कुलीनो न धार्मिकः॥

मुहूर्तमपि जीवेत नरः शुक्लेन कर्मणा।
न कल्पमपि जीवेत कुत्सितेन विकर्मणा॥

नाऽतः परतरं धर्मं वदन्ति पुरुषस्य हि।
यादृशं सर्वकार्येषु स्वसत्यपरिपालनम्॥

अग्निहोत्रमधीतं च दानाद्याः सकलाः क्रियाः।
व्रजन्ति तस्य वैफल्यं वाक्यं यस्याऽनृतं भवेत्॥

सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास् तथा।
सत्यमाहुः परं धर्मं तस्मात् सत्यं न लङ्घयेत्॥

सत्यं ब्रूयात् प्रियं ब्रूयान् न ब्रूयात् सत्यमप्रियम्।
प्रियं च नाऽनृतं ब्रूयादेष धर्मः सनातनः॥

नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्।
द्वेषं दम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत्॥

नाऽप्सु मूत्रं पुरीषं वा ष्ठीवनं वा समुत्सृजेत्।
अमेध्यलिप्तमन्यद् वा लोहितं वा विषाणि वा॥

पाखण्डिनो विकर्मस्थान् बैडालव्रतिकाञ् छठान्।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणाऽपि नाऽर्चयेत्॥

अपूज्यपूजनाच् चैव पूज्यानां चाऽप्यपूजनात्।
नृघातकसमं पापं शश्वदाप्नोति पूरुषः॥

सन्तोष एव परमं पुण्यं सौख्यादिसाधनम्।
असन्तोषः परं पापं दुःखदुर्गतिकारणम्॥

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नाऽवसीदति॥

पुत्रान् दारांश्च शिष्यांश्च सेवकान् बान्धवांस् तथा।
यो दर्शयति सन्मार्गं लभेत स तु सद्गतिम्॥

(स्मृतिपुराणेतिहासादिग्रन्थेभ्यः)

# विजयादशमी

अस्माकं देशे शारदे नवरात्रे देव्याः पूजनं लोके प्रचलितमस्ति। के चन देवीं स्वगृहे एव पूजयन्ति। के चन देवीं पूजयितुं मन्दिरं गच्छन्ति। नवरात्रे पूजिताया देव्या निर्माल्यस्य वितरणं दशम्यां भवति। दशम्यामवरे जना मान्येभ्यो जनेभ्यो देव्या निर्माल्यं गृह्णन्ति। तत्र मान्या जना देव्या घटस्य जलेन अवराञ् जनानभिषिच्य देव्याःपूजने प्रयुक्तस्य चन्दनस्य शेषेण तेषां ललाटे तिलकं कृत्वा दध्यक्षतानपि तत्राऽऽरोप्य तेषां दक्षिणकर्णस्योपरि यवाङ्कुरानपि दत्त्वा तानाशीर्भिरभिवर्धयन्ति। तत्राऽऽशीर्वचन एतत् पद्यं पठन्ति–

आयुर् द्रोणसुते श्रियो दशरथे शत्रुक्षयो राघवे,
ऐश्वर्यं नहुषे गतिश् च पवने मानश् च दुर्योधने।
शौर्यं शान्तनवे बलं हलधरे सत्यं च कुन्तीसुते,
विज्ञानं विदुरे भवन्तु भवतां कीर्तिश् च नारायणे॥ इति।

गृहे देव्याः पूजने शुक्लपक्षस्य प्रतिपदि (नवरात्रस्य प्रथमे दिने) गृहे घटस्थापना क्रियते। पूजकास् तदैव देवीवेदिकायां यथाविधि यवरोपणं कुर्वन्ति। ततः प्रभृति नवरात्र-पर्यन्तं प्रतिदिनं सायम्प्रातः देवीं पूजयित्वा दुर्गाकवचादियुतायाः सप्तशत्याः पाठमपि कुर्वन्ति। यथाशक्ति यथारुच्यज-महिष-कूष्माण्डादिबलिं च देव्यै ददति। गृहेगृहे यथाशक्ति देवी-नैवेद्याय मिष्टान्नानि पच्यन्ते। देव्यै निवेदितानि तानि मिष्टान्नानि सर्वैः खाद्यन्ते। मिष्टान्नानि खादित्वा बालका मोदन्ते। सर्वे बालका बालिकाश् च प्रसन्ना भूत्वा प्रेङ्खया खेलन्ति च।

पुरा दाशरथी रामो लङ्काधिपतिं रावणं विजेतुम्आश्विनशुक्लदशम्यां प्रस्थित आसीदिति देवीभागवते कथा वर्तते।

अस्मिन् समये क्व चित् रामलीलाभिनयस्याऽऽयोजनमपि भवति। रामलीलाभिनयं प्रेक्ष्य सर्वे जनाः प्रसन्ना भवन्ति।

विजयादशम्या आगमनात् पूर्वमेव जनास् तदर्थं सामग्र्या उपकल्पने संलग्ना भवन्ति। अजानां मेषाणां च क्रयाय विक्रयाय च विपण्यः स्थानेस्थान आयोज्यन्ते। अजपालका विक्रेतुमजान् विपणिं नयन्ति। क्रेतारो विपणिं गत्वा सम्यक् परीक्ष्य यथाशक्ति हृष्टं पुष्टं सुन्दरमजं क्रीत्वाऽऽनयन्ति। के चन मनुष्यास् तु विजयादशम्यै इति भणित्वा स्वगृह एवाऽजं पालयन्ति। आसन्नायां विजयादशम्यां युवकाः प्रेङ्खां निर्मातुं संलग्ना भवन्ति। तेषु के चन वंशं कर्तित्वाऽऽनयन्ति। अन्येऽवटं खनित्वा वंशानुच्छ्राययन्ति। अन्ये दीर्घं महान्तं डोरं वर्तयन्ति। अपरे डोरं यथाविधि काष्ठे प्रोल्लम्ब्य प्रेङ्खां निष्पन्नां कुर्वन्ति। सर्वे सोत्साहा भूत्वा स्वंस्वं कर्म कुर्वन्ति। विजयादशम्यां वृद्धा अपि प्रेङ्खामारुह्य धरित्रीं क्ष्वेदितुमिच्छन्ति।

ग्रामे गृहिण्यः स्वस्यस्वस्य गृहस्य परिमार्जनं कुर्वन्ति। श्वेतमृत्तिकया गृहं लिम्पन्ति च। जालानि च सालनिर्यासकालिकया लिप्त्वा रम्यरूपाणि वनयन्ति। गृहिणीनां साहाय्यं कर्तुमन्ये गृह्या अपि संलग्ना भवन्ति। नगरे सौधमुपलेप्तुं कर्मकरा आहूयन्ते। ते निःश्रेणिकामारुह्य गृहस्य भित्तौ उपर्युपर्यपि सम्यक् सुधालेपनं कुर्वन्ति। विजयादशम्यां संस्कृतानि सर्वेषां गृहाणि सुन्दराणि दृश्यन्ते।

के चन बालकाः पतङ्गकानुड्डाययितुं गृहशिखरमारोहन्ति। बालकाः प्रतिस्पर्धिनोऽन्यस्य बालकस्य पतङ्गकं कर्तितुमिच्छन्ति। यः कर्तितुं शक्नोति, स विजयी मन्यते। यस्य पतङ्गकः कृत्तो भवति स पराजितो मन्यते। के चनाऽन्यस्य पतङ्गकं कर्तितुं स्वस्य तन्तुं संस्कुर्वन्ति। के चन बालका विचित्रैः पतङ्गकैर् ढङ्कितमाकाशं प्रेक्ष्यैव प्रसन्ना भवन्ति।

एवं विजयादशम्यां नेपालदेशे सर्वत्र रामणीयकं भवति॥

१. रिक्तस्थानानि समुचितैः पदैः पूरयत–

(अ) मम गृहं सुन्दरम् ..............।
(आ) गृहेगृहे रोटिकाः ..............।
(इ) शुक्लप्रतिपदायां घटस्थापना ..............।
(ई) विजयादशम्यां सर्वेषां गृहाणि सुन्दराणि ........।
(उ) सौधलेपनाय कर्मकराः ..............।
(ऊ) योऽन्यस्य पतङ्गकं कर्तितुं शक्नोति स विजयी ........।

२. अधोलिखितानां प्रश्नानामुत्तराणि लिखत–

(क) आसन्नायां विजयादशम्यां बालकाः किम् उड्डाययन्ति?
(ख) जना नवरात्रे कस्य ग्रन्थस्य पाठं कुर्वन्ति?
(ग) विजयादशम्या विषये पुराणे किमुक्तमस्ति?
(घ) विजयादशम्यां ग्रामे के गृहस्य परिमार्जनं कुर्वन्ति?
(ङ) विजयादशम्यां नगरे कर्मकराः किं कर्तुमाहूयन्ते?
(च) कस्यां तिथौ घटस्थापना भवति?
(छ) कस्यां तिथौ देव्या निर्माल्यस्य ग्रहणं भवति?

**विद्यार्थिना पठनशीलेन भवितव्यम्।**

**सज्जनैः दुर्जनैः सह न गन्तव्यम्।**
**युवाभ्यां वाटी खनितव्या।**
**अद्य भक्तं शीघ्रं पक्तव्यम्।**
**बालकैः सम्यक् पठितव्यम्।**
**समये विद्यालयः गन्तव्यः।**
**सर्वैः सदमित् मार्गे हिण्डितव्यम्।**
**पठिता कथा स्मर्तव्या।**
**परधनं न हर्तव्यम्।**
**त्वया वेदः अध्येतव्यः।**
**स्वस्थेन जनेन दिवा न शयितव्यम्।**
**देवेभ्यः हविः होतव्यम्।**

**वीरेण युद्धात् न भेतव्यम्।**
**मार्गे न नर्तितव्यम्।**
**अक्षैः केन अपि न देवितव्यम्।**
**सर्वैः अक्षराणि परिचेतव्यानि।**
**सुन्दराणि अक्षराणि लेखितव्यानि।**
**मार्गः न रोद्धव्यः।**
**सर्वैः सुकार्यं कर्तव्यम्।**
**अद्य पाठ्यपुस्तकं क्रेतव्यम्।**
**ब्रह्म-विष्णु-महेश्वराः पूजयितव्याः।**
**पामा न कण्डूयितव्या।**
**धान्यं घर्मे शुष्कयितव्यम्।**

१. अधस्तनयोः समूहयोः वाक्यांशान् यथौचिति मेलयित्वा प्रदर्शयत–

| | |
|---|---|
| वीरेण युद्धात् | खनितव्या। |
| युष्माभिः वाटी | स्मर्तव्या । |
| श्रुता कथा | न भेतव्यम्। |

२. रिक्तानि स्थानानि समुचितैः तव्यप्रत्ययान्तैः पदैः पूरयत–

(क) सुन्दराणि अक्षराणि (लिख्) ………।
(ख) देवेभ्यो हविः (हु) ………।
(ग) सर्वैः स्वकर्तव्यपालनम् (कृ) ………।
(घ) ब्रह्म-विष्णु-महेश्वराः (पूज्) ………।

३. अधस्तनान् शब्दान् प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

| | | |
|---|---|---|
| त्वया<br>युष्माभिः<br>मया<br>आवाभ्याम्<br>विद्यार्थिना<br>विद्यार्थिभ्याम्<br>विद्यार्थिभिः<br>रमया | रम्यरूपो लेखः<br>रम्यरूपाः निबन्धाः<br>रम्यरूपा कथा<br>रम्यरूपं काव्यम् | पठितव्यः<br>पठितव्या<br>पठितव्यम्<br>रचयितव्याः |
| | सुमार्गे हिण्डितव्यम्<br>समये शयितव्यम्<br>स्वस्थाने स्थातव्यम्<br>न रोदितव्यम् | |

## अनीयर्प्रत्ययान्तानां पदानां प्रयोगाः

**त्वया पाठः पठनीयः।**

**पर्युषितं वस्तु केन अपि न खादनीयम्।**
**ग्रीष्मे शीतं पानीयं पानीयम्।**
**महती नदी नौकया तरणीया।**
**रुचिराः कथाः श्रवणीयाः।**
**उत्तमानि पुस्तकानि पठनीयानि।**
**स्वामिभिः सेवकाः वृथा न त्यजनीयाः।**
**सर्वैः गुरूणां वचनानि श्रवणीयानि।**
**सुन्दराणि हिमालयशिखराणि प्रेक्षणीयानि।**
**सर्वैः स्वेच्छया प्रेम्णा संस्कृतम् पठनीयम्।**
**असत्यं न वदनीयम्।**
**त्वया शास्त्रम् अध्ययनीयम्।**
**श्रान्तेन सुखशयने शयनीयम्।**
**स्वस्थैः मनुष्यैः प्रतिदिनं स्नानीयम्।**
**सत्पात्रेभ्यः यथाशक्ति दानं दानीयम्।**
**वीरेण शत्रोः न भयनीयम्।**
**परीक्षार्थिभिः परीक्षायाः न भयनीयम्।**
**त्वया शोभनाः चतस्रः मालाः गुम्फनीयाः।**
**त्वया समयेसमये पत्रं लेखनीयम्।**
**छात्रैः गृहकार्यं सदैव करणीयम्।**
**त्वया मनोहारिणी कथा कथनीया।**

कस्यचित् किमपि नो हरणीयम् मर्मवाक्यमपि नोच्चरणीयम्।
श्रीपतेः पदयुगं स्मरणीयम् लीलया भवजलं तरणीयम्॥

शास्त्रं सुचिन्तितमथो परिचिन्तनीयमाराधितोऽपि नृपतिः परिसेवनीयः।
अङ्के धृताऽपि युवतिः परिरक्षणीया शास्त्रे नृपे च युवतौ च कुतो वशित्वम्॥

१. अघस्तनान् वाक्यांशान् यथौचिति मेलयित्वा प्रदर्शयत।

| (क) | (ख) |
|---|---|
| त्वया पाठः | पठनीयम् |
| सर्वैः संस्कृतं प्रेम्णा | दानीयम् |
| ग्रीष्मे शीतं जलं | पठनीयः |
| सदाचारिभ्यः ब्राह्मणेभ्यः दानं | पानीयम् |
| धार्मिकेण जनेन देवेभ्यः हविः | न चोरणीयम् |
| केनाऽपि अन्यस्य धनं | न रोधनीयः |
| अन्यस्य मार्गः | हवनीयम् |

२. रिक्तानि स्थानानि कोष्ठके निर्दिष्टानां धातूनाम् अनीयर्प्रत्ययान्तैः रूपैः पूरयत–

(क) पर्युषितं वस्तु केनाऽपि न ............... (खाद्)।

(ख) सुन्दराणि हिमालयशिखराणि .......... (प्र+ईक्ष्)।

(ग) छात्रैः गृहकार्यं ............... (कृ)।

(घ) स्वस्थैः मनुष्यैः प्रतिदिनं ............... (स्ना)।

(ङ) वीरेण शत्रोः न ............... (भी)।

३. अधस्तनान् शब्दान् प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचनीयानि–

| | | |
|---|---|---|
| छात्रेण<br>छात्राभ्याम्<br>छात्रैः<br>त्वया<br>युवाभ्याम्<br>युष्माभिः<br>मया<br>आवाभ्याम्<br>अस्माभिः | पाठः<br>श्लोकाः<br>कथा<br>संस्कृतम्<br>पुस्तकानि<br>उपदेशः | पठनीयः<br>पठनीया<br>पठनीयम्<br>पठनीयानि<br>घोषणीयाः<br>श्रवणीयः<br>अभ्यसनीयम् |
| | कुदेशे<br>रात्रौ<br>कर्हिचित्<br>परीक्षायाः<br>कदापि<br>अकाले | शयनीयम्<br>न भयनीयम्<br>न खेलनीयम्<br>न रोदनीयम्<br>हसनीयम्<br>न हिण्डनीयम्<br>न जागरणीयम्<br>न लज्जनीयम्<br>न नर्तनीयम्<br>स्वपनीयम्<br>न निवसनीयम् |

**अध्यापकः छात्रान् अध्यापयति।**

**पर्युषितस्य वस्तुनः खादकाः अस्वस्थाः भवन्ति।**
**गायकाः रुचिरं गीतम् अगासिषुः।**
**प्रेक्षकाः सुन्दराणि चित्राणि प्रैक्षिषत।**
**सर्वे पाठकाः श्रेष्ठानि पुस्तकानि पठन्तु।**
**पाचकः मिष्टं भोजनम् अपाक्षीत्।**
**राष्ट्रस्य रक्षकः माननीयः भवति।**
**स्वामिनः सेवकान् पालयन्ति।**
**शासकः जनतायाः करं गृह्णाति।**
**प्रभातस्य वातः सर्वेभ्यः सुखस्य दायकः भवति।**
**इयम् ओषधिः रोगस्य नाशिका अस्ति।**
**कर्षकाः वर्षासु धान्यं रोपयन्ति।**
**विद्यायाः प्रचारकाः प्रशंसनीयाः भवन्ति।**

१. अधस्तनान् वाक्यांशान् यथौचिति मेलयित्वा प्रदर्शयत–

| (क) | (ख) |
|---|---|
| कर्षकाः | नृत्यं प्रेक्षन्ते। |
| गायिकाः | भोजनं पचन्ति। |
| प्रेक्षकाः | क्षेत्रं कृषन्ति। |
| पाचकाः | रुचिरम् अगायन्। |

२. रिक्तानि स्थानानि समुचितैः ण्वुल्प्रत्ययान्तैः पदैः पूरयत–

(क) कुथितस्य वस्तुनः .................. अस्वस्थाः भवन्ति।
(ख) इदं रसायनम् अस्य रोगस्य .................. अस्ति।
(ग) .................. श्रेष्ठानि पुस्तकानि पठन्तु।
(घ) .................. छात्रान् अध्यापयन्ति।
(ङ) प्रभातस्य वातः सुखस्य .................. भवति।

३. अधस्तनानां धातूनां ण्वुल्प्रत्ययान्तानि रूपाणि प्रयुज्य वाक्यानि रचयत–

खाद् शिक्ष् गै प्र+ईक्ष पठ् पच् रक्ष् सेव् शास् दा नश् कृष् अधि+आपि प्र+चारि।

**होता यजमानस्य हवींषि जुहोति।**

**धर्मस्य श्रोतारः अल्पाः एव भवन्ति।**
**जनाः नेतॄन् अनुगच्छन्ति।**
**युद्धात् पलायिता दण्ड्यः भवति।**
**अभक्ष्यस्य भक्षयिता निन्दितः भवति।**
**सत्पथे गन्ता प्रशंसनीयः भवति।**
**युद्धे जेता ऐश्वर्यं लभते।**
**तथ्यस्य वक्तारः दुर्लभाः भवन्ति।**

**धनस्य दाता उदारः कथ्यते।**
**धर्मस्य उपदेष्टा पूजनीयः भवति।**
**परकार्यस्य रोद्धा निन्दितः भवति।**
**सत्कार्यस्य कर्तारः प्रशंसनीयाः भवन्ति।**
**व्याकरणस्य ज्ञाता वैयाकरणः कथ्यते।**
**परधनस्य चोरयिता दण्ड्यः भवति।**
**नियमस्य पालयिता प्रशंसनीयः भवति।**

१. अधस्तनान् वाक्यांशान् यथौचिति मेलयित्वा प्रदर्शयत–

| (क) | (ख) |
|---|---|
| सत्कार्यस्य कर्ता | दुर्लभाः भवन्ति। |
| तथ्यस्य वक्तारः | दण्ड्यः भवति। |
| परधनस्य चोरयिता | प्रशंसनीयः भवति। |
| धर्मस्य श्रोतारः | निन्दितः भवति। |
| अभक्ष्यस्य भक्षयिता | अल्पाः एव भवन्ति। |

२. रिक्तानि स्थानानि समुचितैः तृच्प्रत्ययान्तैः पदैः पूरयत–

(क) ……………… यज्ञे हवींषि जुहोति।
(ख) सत्पथे ……………… प्रशंसनीयः भवति।
(ग) धर्मस्य ……………… पूज्यः भवति।
(घ) धनस्य ……………… पुण्यं लभते।

३. अधस्तनानां पदानां प्रयोगं कृत्वा यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

भविता, खादिता, रक्षिता, गन्ता, श्रोता, नेता, पलायिता, जेता, विजेता, पाता, वक्ता, होता, भोक्ता, उपभोक्ता, कर्ता, ज्ञाता, विक्रेता, चोरयिता, पालयिता।

४. अधस्तनानां धातूनां तृच्प्रत्ययान्तानि रूपाणि प्रयुज्य वाक्यानि रचयत–

श्रु नी जि गम् वच् हु दा उप+दिश् रुध् कृ ज्ञा चुर् भक्ष् पाल्।

# वयस्ययोर् हरि-दिनेशयोः संवादः

**दिनेशः-** सखे हरे, किं कुर्वन् असि ?

**हरिः-** किमपि कुर्वन् नाऽस्मि।

**दिनेशः-** सखे, आगच्छ, खेलनकूर्दनस्पर्धां विलोकयितुं गच्छाव।

**हरिः-** कुत्र भविष्यति खेलनकूर्दनस्पर्धा ?

**दिनेशः-** शरत्पुरग्रामे आयोजिताऽस्ति।

**हरिः-** कतिवादने प्रारप्स्यते ?

**दिनेशः-** एकादशवादने प्रारप्स्यते, अववेला भविष्यति, शीघ्रं गमनीयम्।

**हरिः-** अहं तु तत्र गन्तुं न प्राप्नोमि, मयाऽद्य मातृष्वसुर् गृहं गन्तव्यमस्ति।

**दिनेशः-** कुत्राऽस्ति तव मातृष्वसुर् गृहम् ?

**हरिः-** रामपुरे, इतः सार्धक्रोशद्वये वर्तते।

**दिनेशः-** तत्र कश्चन विशिष्टः कार्यक्रमोऽस्ति ?

**हरिः-** नाऽस्ति, केवलं मेलनायैव गच्छामि।

**दिनेशः-** केन सह यास्यसि ?

**हरिः-** मात्रा भगिन्या च सह यास्यामि।

**दिनेशः-** इतः कदा हिण्डसे ?

**हरिः-** भोजनानन्तरं शीघ्रमेव हिण्डितव्यमिति माता भणितवत्यस्ति।

**दिनेशः-** तर्ह्यद्याऽहमेकल एव खेलनकूर्दनस्पर्धां द्रष्टुं गमिष्यामि। श्वस् तु त्वमपि गन्तासि नु ?

**हरिः-** वयं मातृष्वसुर् गृहादद्य सायङ्काल एव प्रत्यावर्तिष्यामहे। श्वस् त्वहं तत्र गन्तुं शक्नुयाम्। किन्तु श्वस् तु विद्यालयं प्रति गन्तव्यम्।

**दिनेशः-** श्वो विद्यालयेऽवकाशो भविता। परश्व एव विद्यालयं प्रति गन्तव्यम्। इदानीमहं गच्छामि। अववेला जायमानाऽस्ति।

**हरिः-** भवति, गच्छ। श्वः पुनर् मेलितास्वः।

असौ बालकः विद्यालयं प्रति गच्छन् अस्ति।

खेलनाय सज्जीभवन्तं विद्यार्थिनं पश्य।
गर्जतः सिंहात् हस्ती पलायते।
चलतः यानस्य समीपं न गच्छ।
वृक्षमारोहन् गोपालः ह्यः वृक्षाद् अपतत्।
गोपालम् अस्वस्थालयं नयतः ग्रामीणान्
ह्यः अहम् अपश्यम्।
त्वं मधुरं गायन्तीं गायिकाम् अद्राक्षीः?
यूयं रुचिरं गायन्तम् गायकम् अद्राष्ट?
त्वं किं जिघ्रन् असि?
त्वं किं पश्यन् असि?
त्वं पठन्तौ भ्रातरौ न विह्वयस्व।

अहं चत्वरे चरन्तीं गाम् अद्राक्षम्।
अम्बा महानसे भक्तं पचन्ती अस्ति।
बालिका मात्रा उक्तं शृण्वती अस्ति।
विद्यालयं गच्छति बालके जलं नैव क्षिप।
विद्यालयं गच्छन्तीषु बालिकासु जलं नैव क्षिप।
हरिः वृक्षात् पतत् फलं समादत्त।
रुदन्तं शिशुं सान्त्वय।
रुदते बालकाय दुग्धं देहि।
गृहिणी भिक्षवे भिक्षां ददती अस्ति।
लुग्नानि घर्मेण शुष्यन्ति सन्ति।
वधूः गृहे कर्म कुर्वती अस्ति।

१. अधस्तनयोः द्वयोः समूहयोः वाक्यांशान् यथौचिति मेलयित्वा प्रदर्शयत–

| (क) | (ख) |
|---|---|
| छात्राः विद्यालयं गन्तुम् | पतत् अस्ति। |
| बालिका विटपान् | तत्पराः भवन्तः सन्ति। |
| वृक्षात् फलम् | पठन्तौ स्वः। |
| यूयं किम् | सिञ्चन्ती अस्ति। |
| आवां पाठम् | कुर्वन्तः स्थ? |

२. रिक्तस्थानानि समुचितैः शत्रन्तैः पदैः पूरयत–

(क) चत्वरे .............. बालकौ पश्य।
(ख) .............. सिंहात् हस्ती पलायते।
(ग) .............. यानस्य समीपं न गच्छ।
(घ) विद्यालयं .............. विद्यार्थिनि जलं न क्षिप।
(ङ) .............. बालकाय दुग्धं देहि।

**अम्बा महानसे पाककार्येषु रममाणा अस्ति।**

**भ्रातरौ त्वां दृष्ट्वा स्मयमानौ स्तः।**
**बालिका शनैःशनैः हिण्डमाना अस्ति।**
**कृषकः पलायमानं मृगं प्रति लगुडं प्राहृत।**
**जनाः शिल्पविद्यां शिक्षमाणाय छात्राय अपि साहाय्यं ददतु।**
**वर्धमानस्य रोगस्य चिकित्सा शीघ्रम् एव कार्या।**
**हिण्डमानस्य पथिकस्य हस्तात् भाण्डम् अपप्तत्।**

**वेदम् अधीयानेभ्यः ब्राह्मणेभ्यः दानं देहि।**
**अहं मार्गे शयानात् चित्रकात् अभैषम्।**
**सः जालिकः मत्स्यान् समाददानः अस्ति।**
**दुःखेन क्लिश्यमाने जने सर्वैः दया कार्या।**
**असौ जालिकः किं कुर्वाणः अस्ति ?**
**अदः गृहम् दह्यमानम् अस्ति।**
**दह्यमाने गृहे न अवतिष्ठस्व।**

१. अधस्तनयोः द्वयोः समूहयोः वाक्यांशान् यथौचिति मेलयित्वा प्रदर्शयत–

| (क) | (ख) |
|---|---|
| अम्बा महानसे पाककार्येषु | व्याघ्रात् अभैषम्। |
| अधीयानेभ्यः ब्राह्मणेभ्यः | रममाणा अस्ति। |
| वर्धमानस्य रोगस्य चिकित्सा | न अवतिष्ठस्व। |
| अहं मार्गे शयानात् | दानं देहि। |
| दह्यमाने गृहे | शीघ्रम् एव कार्या। |

२. रिक्तानि स्थानानि समुचितैः शानजन्तैः पदैः पूरयत–

(क) कृषकः ............... मृगं प्रति लगुडं प्राहृत।
(ख) जनाः शिल्पविद्यां ............... छात्रेभ्यः अपि साहाय्यं ददतु।
(ग) त्वं मार्गे ............... कुक्कुरात् अभैषीः?
(घ) मार्गे ............... पथिकस्य हस्तात् झोलिका अपप्तत्।
(ङ) दुःखेन ............... जने सर्वैः दया कार्या।

३. अधस्तनान् शब्दान् प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयत–

| | | |
|---|---|---|
| बालकः<br>बालकौ<br>बालिके<br>बालकाः<br>बालिकाः<br>कुक्कुरः<br>कुक्कुरौ | हिण्डमानः<br>पलायमानः<br>पलायमाने<br>हिण्डमानौ<br>हिण्डमाने<br>हिण्डमानाः<br>पलायमानौ | अस्ति<br>स्तः<br>सन्ति |

अवहृतम् अवकरम् अवकरप्रासनस्थाने प्रास्य।

श्रुतं शास्त्रं कर्तव्यं बोधयति।

प्रहरी पलायितं चौरं न्यगृह्णात्।

पठितान् श्लोकान् कण्ठस्थान् कुरु।

त्वया आनीतं जलं शीतम् आसीत्।

सम्यक् पक्वं फलं खादनीयम्।

गृहे स्थितः जनः शीतेन न पीड्यते।

ज्वलितम् अग्निं सर्वे सेवन्ते।

एकवारं दृष्टं जनं न विस्मर।

जाले अवस्थितः मर्कटकः तत्र पतितान् कीटान् खादति।

स्नातः जनः अनुलिम्पति।

निद्राणं शिशुं न विबोधय।

बुद्धिमान् मनुष्यः अन्येन उक्तं धैर्येण शृणोति।

दुर्जनः अदत्तं परद्रव्यम् अपि आदत्ते।

सन्ध्योपासनवेलायां स्यूतं लुग्नं न लगयितव्यम्।

बुद्धः श्लोकार्थः न विस्मरणीयः।

शुष्काणि पत्राणि वृक्षात् अपप्तन्।

कदा चित् नष्टं वस्तु अपि पुनः प्राप्यते।

अपरिचितः जनः सहसा न विश्वसनीयः।

मम भगिनी वाटे मृतं सर्पं ददर्श।

कृष्टे क्षेत्रे कृषाणाः बीजं वपन्ति।

गुरुणा पृष्टं प्रश्नं छात्रः प्रतिवक्ति।
मिलिताः सखायः प्रसन्नाः भवन्ति।
कुशासने उपविष्टः जनः जपति।
ह्यः भूस्खलनेन राजमार्गः रुद्धः अभवत्।
त्वया क्रीतं पुस्तकम् एकवारं मां दर्शय।
मित्रात् गृहीतं वस्तु मित्राय एव प्रत्यर्पय।
ताडितः पशुः यथोक्तं कुरुते।
सम्यक् प्रक्षालितानि फलानि एव खाद।
स्वगृहे पालितान् पशून् पक्षिणः च सम्यक् पोषय।
पितामह्या ह्यः कथिता कथा अभ्रुतपूर्वा आसीत्।
रोपिताः विटपाः सायंप्रातः सम्यक् सेचनीयाः।
पक्षिणः व्याधेन प्रसारिते जाले अपप्तन्।

१. द्वयोः समूहयोः एकैकं वाक्यांशमादाय यथौचिति मेलयित्वा प्रदर्शयत–

| (क) | (ख) |
|---|---|
| त्वया लिखितौ | कथा आश्चर्यकरी आसीत्। |
| पितामह्या कथिता | पुस्तकम् अद्य प्रापत्। |
| रामः ह्यः नष्टं | लेखौ सुन्दरौ आस्ताम्। |
| शयिताः | धैर्येण शृणु। |
| अन्येन उक्तं | शिशवः रुदन्ति। |

२. रिक्तानि स्थानानि समुचितैः क्त-प्रत्यायान्तैः पदैः पूरयत–

(क) त्वया ............... कथा रुचिकरी आसीत्।
(ख) मया ............... मनुष्यः भयङ्करः आसीत्।
(ग) त्वम् ............... विटपान् नित्यं सिञ्च।
(घ) अहम् ............... श्लोकं कण्ठस्थं कुर्वे।
(ङ) मित्रात् ............... वस्तूनि मित्राय एव प्रत्यर्पय।

३. अधोलिखितानां धातूनां क्तप्रत्ययान्तानि रूपाणि प्रयुज्य वाक्यानि रचयत–

खाद् श्रु स्था पठ् पच् दृश् पत् स्ना वच् दा बुध् शुष् नश् क्री।

**भक्तं पाचितवती अम्बा भक्तं खादितुम् मां विस्वयते।**

**कूपं खातवान् जनः पुण्यवान् भवति।**
**पत्रम् आहृतवान् पत्रवाहकः अस्माकम् गृहम् आयासीत्।**
**मम मित्रं बहु शास्त्रं श्रुतवत् अस्ति।**
**पत्रं लिखितवान् जनः पत्रालयं याति।**
**नीतिकथां श्रुतवान् जनः ततः शिक्षां गृह्णाति।**
**शास्त्रम् अधीतवान् जनः तस्य व्याख्यानं करोति।**
**जनाः उदितवन्तं सूर्यं प्रणमन्ति।**
**दीनेभ्यः दुःखिभ्यश्च दानं दत्तवान् जनः पुण्यं प्राप्नोति।**
**शास्त्रार्थं बुद्धवान् जनः तदनुसारम् आचरणं कर्तुं शक्नोति।**
**भोजनं प्राप्तवान् जनः प्रसन्नः भवति।**
**क्षेत्रं कृष्टवान् कृषकः तत्र बीजानि वपति।**
**निरपराधं जनं ताडितवान् पुरुषः निन्दितः भवति।**

३. अधस्तनान् वाक्यांशान् यथौचिति मेलयित्वा प्रदर्शयत–

| (क) | (ख) |
|---|---|
| स्नातवान् | लगितवान् जनः सभायां शोभते। |
| दुःखं प्राप्तवान् | ब्राह्मणः सन्ध्योपासनं कुरुते। |
| सुन्दराणि लुग्नानि | नार्यः मन्दिरात् प्रत्यावर्तन्ते। |
| जालं प्रसारितवान् | जनः परमात्मानं स्मरति। |
| देवान् पूजितवत्यः | व्याधः निलीय अवतिष्ठते। |

२. रिक्तस्थानानि समुचितैः क्तवतुप्रत्ययान्तैः पदैः पूरयत–

(क) बालकः व्याघ्रात् .................. अस्ति।
(ख) अहम् इतिहासं .................. अस्मि।
(ग) त्वम् .................. सूर्यं प्रणमसि।
(घ) माता भक्तं .................. अस्ति।
(ङ) मम मित्रं शास्त्रं .................. अस्ति।

१. अधस्तनधातूनां क्तवतुप्रत्ययान्तानि रूपाणि प्रयुज्य वाक्यानि रचयत–

खाद् श्रु स्था खन् नी दा बुध् लिख् कृष् क्री।

# तपो-दान-चित्तसमाधान-सत्कर्म-रहस्यानि

देव-द्विज-गुरु-प्राज्ञ-पूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते॥

दातव्यमिति यद् दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद् दानं सात्त्विकं स्मृतम्॥

यत् तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते च परिक्लिष्टं तद् दानं राजसं स्मृतम्॥

अदेशकाले यद् दानमपात्रेभ्यश् च दीयते।
असत्कृतमवज्ञातं तत् तामसमुदाहृतम्॥

अश्रद्धया हुतं दत्तं तपस् तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह॥

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस् तदोच्यते॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर् मुनिरुच्यते॥

यः सर्वत्राऽनभिस्नेहस् तत्तत् प्राप्य शुभाऽशुभम्।
नाऽभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस् तस्य प्रज्ञा प्रतिष्ठिता॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद् विद्वाँस् तथाऽसक्तश् चिकीर्षुर् लोकसङ्ग्रहम्॥

तस्माच् छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥

(क)

**वानराः उपवनम् आगच्छन्ति।** **वानराः फलानि खादन्ति।**

**वानराः फलानि खादितुम् उपवनम् आगच्छन्ति।**

**भ्रातरौ विद्यालयम् अगमताम्।** **भ्रातरौ विद्यालये अपठिष्टाम्।**

**भ्रातरौ पठितुं विद्यालयम् अगमताम्।**

**अहं नदीं गमिष्यामि।** **अहं नद्यां स्नास्यामि।**

**अहं स्नातुं नदीं गमिष्यामि।**

**वैदेशिकाः नेपालदेशम् आगच्छन्ति।** **वैदेशिकाः नेपालदेशे पर्यटन्ति।**

**वैदेशिकाः पर्यटितुं नेपालदेशम् आगच्छन्ति।**

(ख)

**पान्थः नदीं तरीतुं लग्नः अस्ति।**

**भगिनी मालां गुम्फितुं लग्ना अस्ति।**

**माता देवं पूजयितुं लग्ना अस्ति।**

१. अधोलिखितेषु वाक्येषु द्वेद्वे वाक्ये तुमुन्प्रत्ययान्तैः पदैः योजयित्वा एकैकं वाक्यं रचयत–

(क) बालकाः धारां गच्छन्ति। बालकाः स्नान्ति। (ग) अहं महानसं गच्छामि। अहं भक्तं खादामि।

(ख) बालिके विद्यालयं गच्छतः। बालिके विद्यालये पठतः। (घ) वयं चत्वरं गच्छामः। वयं चत्वरे खेलामः।

२. अधोलिखितानि तुमुन्प्रत्ययान्तानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

भवितुम्, श्रोतुम्, जेतुम्, नेतुम्, पातुम्, घ्रातुम्, स्थातुम्, गातुम्, विह्वातुम्, स्मर्तुम्, हर्तुम्, तरीतुम्-तरितुम्, पर्यटितुम्, प्रेक्षितुम्, खादितुम्, खेलितुम्, गन्तुम्, चूषितुम्, जीवितुम्, त्यक्तुम्, द्रष्टुम्, पक्तुम्, पठितुम्, भणितुम्, भ्रमितुम्, मार्गितुम्, रक्षितुम्, वोढुम्, हिण्डितुम्, अत्तुम्, यातुम्, लातुम्, स्नातुम्, शयितुम्, अध्येतुम्, रोदितुम्, दोग्धुम्, वक्तुम्, होतुम्, देवितुम्, सेवितुम्, सोतुम्, प्राप्तुम्, तोत्तुम्, गुम्फितुम्, प्रवेष्टुम्, कर्तितुम्, प्रष्टुम्, भ्रष्टुम्-भर्ष्टुम्, मेलितुम्, उपलेप्तुम्, रोद्धुम्, छेत्तुम्, पेष्टुम्, भङ्क्तुम्, तनितुम्, कर्तुम्, क्रेतुम्, ज्ञातुम्, चोरयितुम्, कथयितुम्, ताडयितुम्, पूजयितुम्, मार्जयितुम्, वण्टयितुम्, कण्डूयितुम्।

## क्त्वाप्रत्ययान्तानां ल्यबन्तानां च पदानां प्रयोगाः

(क)

**बालकः भक्तं खादति। बालकः विद्यालयं गच्छति।**

**बालकः भक्तं खादित्वा विद्यालयं गच्छति।**

**बालिके नदीम् अगमताम्। बालिके जलम् आनैष्टाम्।**

**बालिके नदीं गत्वा जलम् आनैष्टाम्।**

**अहं फलानि क्रेष्यामि। अहं फलानि खादिष्यामि।**

**अहं फलानि क्रीत्वा खादिष्यामि।**

(ख)

**गोपालः वृक्षम् आरोहति। गोपालः फलानि भूम्यां पातयति।**

**गोपालः वृक्षम् आरुह्य फलानि भूम्यां पातयति।**

**पिता गृहम् आगमिष्यति। पिता त्वां दण्डयिष्यति।**

**पिता गृहम् आगत्य त्वां दण्डयिष्यति।**

१. अधोलिखितेषु वाक्येषु द्वेद्वे वाक्ये क्त्वाप्रत्ययान्तैः ल्यबन्तैः वा पदैः योजयित्वा एकैकं वाक्यं रचयत–

(क) कृषाणाः वाटीं खनन्ति। कृषाणाः बीजानि वपन्ति।

(ख) छात्राः विद्यालये पठन्ति। छात्राः गृहं गच्छन्ति।

(ग) हरिः आम्रं प्रक्षालयति। हरिः आम्रं चूषति।

(घ) वयं मञ्चेषु उपविशामः। वयं पाठं पठामः।

२. अधोलिखितानि क्त्वाप्रत्ययान्तानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

भूत्वा, जित्वा, श्रुत्वा, अर्जित्वा, खनित्वा, खादित्वा, खेलित्वा, गत्वा, गीत्वा, घ्रात्वा, चरित्वा, चूषित्वा, जपित्वा, तीर्त्वा, त्यक्त्वा, दग्ध्वा, दृष्ट्वा, धावित्वा, नीत्वा, पक्त्वा, पठित्वा, पतित्वा, पीत्वा, भणित्वा, रक्षित्वा, हृत्वा, स्मृत्वा, हसित्वा, हिण्डित्वा, जग्ध्वा, पात्वा, लात्वा, स्नात्वा, रुदित्वा, शयित्वा, उक्त्वा, दुग्ध्वा, हुत्वा, दत्त्वा, देवित्वा-द्यूत्वा, नर्तित्वा, सुत्वा, तुत्त्वा, कर्तित्वा, कृष्ट्वा, भृष्ट्वा, मिलित्वा, लिखित्वा, लिप्त्वा, सिक्त्वा, स्पृष्ट्वा, रुद्ध्वा, छित्त्वा, पिष्ट्वा, भङ्क्त्वा, तनित्वा, कृत्वा, क्रीत्वा, गृहीत्वा, ज्ञात्वा, बद्ध्वा, मथित्वा, चोरयित्वा, कथयित्वा, गणयित्वा, चिन्तयित्वा, ताडयित्वा, तर्जयित्वा, अर्जयित्वा, दण्डयित्वा, पालयित्वा, पीडयित्वा, पूजयित्वा, मानयित्वा, मार्जयित्वा, रचयित्वा, वण्टयित्वा, वर्णयित्वा, कण्डूयित्वा, शुष्कयित्वा, पाठयित्वा, खादयित्वा, लगयित्वा, जिगमिषित्वा, पापठित्वा।

३. अधोलिखितानि ल्यबन्तानि पदानि प्रयुज्य यथाशक्ति अधिकानि वाक्यानि रचयितव्यानि–

अनुभूय, पर्यट्य, प्रेक्ष्य, आक्रुश्य, विजित्य, सन्दृश्य, उड्डीय, अपनीय, आनीय, प्रणम्य, आरुह्य, अनुष्ठाय, निपाय, प्रजग्ध्य, अधीत्य, संशय्य, प्रोच्य, प्रहुत्य, प्रदाय, विधाय, प्रदीव्य, निलीय, अभिषुत्य, प्राप्य, परिचित्य, प्रतुद्य, उन्मुच्य, उपविश्य, प्रविश्य, आपृच्छ्य, निरुध्य, वितत्य, संस्कृत्य, अनुकृत्य, अपकृत्य, उपकृत्य, विक्रीय, निगृह्य, संगृह्य, संचोर्य, परिपाल्य, उपयोज्य, प्रस्थाप्य, अध्याप्य।

# राष्ट्रविकासः

राष्ट्रमिति स्वतन्त्रेणाऽऽजीविकाक्षेत्रेण युक्तानां सुसङ्घटितानां प्रायेण समानेनाऽऽदर्शेन प्रेरितानां जनानां समूह उच्यते। विकास इति भौतिकरूपेणाऽऽध्यात्मिकरूपेण चोन्नतिरुच्यते। राष्ट्रस्य विकासो राष्ट्रविकास इति कथ्यते।

राष्ट्रविकासाय राष्ट्रभावना, शिक्षा, स्वास्थ्यरक्षा, निवासव्यवस्था, परिधानव्यवस्था, भोजनव्यवस्था, मार्गव्यवस्था, कृषिः, उद्योगः, वाणिज्यम् इत्यादिषु विषयेषु प्रगतिरावश्यिका भवति।

सर्वप्रथमं देशवासिषु जनेषु राष्ट्रभावना जागरयितव्या। तदर्थं सर्वेषां राष्ट्रिकाणां कृते शाश्वतो वास्तविको न्यायः सुलभः कार्यः। राष्ट्रे सुशासनं स्थापनीयम्। शिक्षाविकासाय ग्रामेग्रामे विद्यालयाः स्थापनीयाः। नगरेनगरे महाविद्यालयाः स्थापनीयाः। विद्यालयेषु सुशिक्षा प्रदातव्या। धार्मिककार्याणाम्, कृषिवाणिज्यादीनामुपभोग्यानां वस्तूनामुत्पादनस्य कार्याणाम्, व्यवस्थापनकार्याणाम्, प्रशासनकार्याणाम्, रक्षणकार्याणां च कृते योग्याः सुशीलाश्च जना उत्पादयितव्याः।

कृषेर् विकासाय सेचनव्यवस्थाऽत्यावश्यिका भवति। तदर्थं कुल्यानां निर्माणं कर्तव्यम्। प्राकृतिकस्योर्वरकस्योत्पादने कृषकाः प्रोत्साहनीयाः। कृषिकार्येण सहैव पशुपालनमपि प्रोत्साहनीयम्। फलानामुत्पादनेऽप्यवधानं देयम्।

कृषिकार्यादुत्पादितानां खाद्यान्नानाम्, दाल्यन्नानाम्, फलादीनाम्, विविधोद्योगोत्पादितानां वस्तूनां च स्थानान्तरे प्रापणाय मार्गस्य यानस्य च व्यवस्थाऽत्यावश्यिका भवति। तदर्थं ग्रामेग्रामे रथ्यानिर्माणं च कर्तव्यं भवति।

**एवमेवोपभोग्यानां वस्तूनां शोधनाय यन्त्राणां स्थापनमप्यावश्यकम्। स्थानेस्थान उद्योगक्षेत्राणि च स्थापयितव्यानि। तत्र खाद्य-वस्त्र-भाण्ड-गृहोपकरणादीन्युपभोग्यानि वस्तूनि यन्त्र-शस्त्रा-ऽस्त्रादीन्यप्युत्पादनीयानि।**

**स्वास्थ्यक्षेत्र आयुर्वेदस्याऽऽधुनिकचिकित्साविज्ञानस्य च सम्यक् शिक्षणस्य व्यवस्था कार्या। मुख्यतया स्वदेश एव समुपलभ्यैरुत्पादयितुं शक्यैश्चौषधैर् जनस्वास्थ्यस्य रक्षणे प्रयत्नः कार्यः। तदर्थं निपुणाः सुशीला दयावन्तश्च चिकित्सकाः परिचारिकाश्चोत्पादनीयाः।**

**सर्वै राष्ट्रिकैः परपीडनं परिहृत्य यथाशक्ति धर्मा-ऽर्थ-काम-मोक्षाणां चतुर्णामेव पुरुषार्थानां साधने न्याय्यः प्रयासः कर्तव्यः। परस्परं सौमनस्यं च स्थापनीयम्।**

**राष्ट्रस्य विकासे समाजे प्रसिद्धानां प्रभावशालिनां शक्तिमतामधिकारे स्थितानां च जनानां मुख्यं स्थानं भवति। अतस् तादृशैर् जनै राष्ट्रकल्याणस्य कृते सम्यक् कार्यं कर्तव्यम्। साधारणैर् जनैश् च सज्जनान् दुर्जनाँश् च परिचित्य धर्मात्मानः सत्यनिष्ठा न्यायपराः सज्जना उत्साहवन्तः क्रियाशीलाश् च जना आदरेण सहयोगेन सत्कारेण च नेतृत्वायाऽग्रे सारणीयाः, राष्ट्रकार्याय प्रोत्साहनीयाश् च। दुर्जना भ्रष्टा धर्मविमुखा लोकवञ्चका लोकपीडका अन्यायिनः परचक्रसेवकाश् च जना अनादरेणोपेक्षणेन च पृष्ठतः कार्याः परिहार्याश् च। जनैः क्षणिक-निज-स्वार्थपूरणाय दुर्जना भ्रष्टा लोकवञ्चका लोकपीडका अन्यायिनश् च जना न स्तोतव्या न सत्कार्या न सेव्या न च नेतृत्वायाऽग्रतः सारणीयाः। एवं कृते राष्ट्रविकासः शीघ्रं सुष्ठु च भवेत्।**

१. अधोलिखितानां प्रश्नानामुत्तराणि लिखत–

(क) राष्ट्रमिति किमुच्यते?
(ख) विकास इति किमुच्यते?
(ग) राष्ट्रविकासायाऽऽवश्यका विषयाः के?
(घ) राष्ट्रभावना कथं जागरयितुं शक्या?
(ङ) शिक्षाविकासाय किंकिं करणीयम्?
(च) कृषिविकासाय किंकिं करणीयम्?
(छ) रथ्यानिर्माणेन को लाभः?
(ज) राष्ट्रविकासायोद्योगक्षेत्रस्य स्थापनमावश्यकं न वा?
(झ) राष्ट्रिकाणां स्वास्थ्यरक्षणाय कीदृशी व्यवस्थाऽऽवश्यिका?
(ञ) राष्ट्रिकैः सर्वैरपि कस्मिन् विषये प्रयासः कर्तव्यः?
(ट) पुरुषार्थाः कति सन्ति?
(ठ) पुरुषार्थाः के?
(ड) राष्ट्रविकासे केषां जनानां मुख्यं स्थानं भवति?
(ढ) राष्ट्रविकासाय साधारणानां जनानां कर्तव्यं किम्?
(ण) राष्ट्रविकासस्य शीघ्रतायै किं करणीयम्?

**रामश्यामयोः मध्ये रामः उच्चतरः अस्ति।**

**सीता-लक्ष्म्योः मध्ये सीता पटुतरा अस्ति।**
**अनयोः फलयोः मध्ये इदं फलं स्थूलतरम् अस्ति।**
**अहं लघुतरया ह्रासिकया घासं कृन्तामि।**
**त्वं दरिद्रतराय मार्गणाय रूप्यकं देहि।**
**त्वम् इमे द्वे रूप्यके दरिद्रतरायै मार्गणायै देहि।**
**अहं स्थूलतरात् कुक्कुरात् एव बिभेमि, लघुतरात् कुक्कुरात् तु न बिभेमि।**
**अनयोः मनुष्ययोः मध्ये अयं मनुष्यः वृद्धतरः अस्ति।**
**हस्ति-घोटकयोः मध्ये हस्ती स्थूलतरः भवति।**
**रामः गोपालात् बुद्धिमत्तरः अस्ति।**
**धनात् विद्या प्रशस्यतरा भवति।**
**धनिनः मनुष्यात् बुद्धिमान् मनुष्यः प्रशस्यतरः भवति।**
**विद्यायाः बुद्धिः प्रशस्यतरा भवति।**
**नार्याः स्वरः पुरुषस्य स्वरात् मधुरतरः भवति।**

१. अधस्तनान् वाक्यांशान् यथौचिति मेलयित्वा प्रदर्शयत–

| (क) | (ख) |
|---|---|
| राम-श्यामयोः मध्ये | हस्ती स्थूलतरः भवति। |
| धनात् विद्या | बुद्धिमत्तरः अस्ति। |
| हरिः गोपालात् | रामः पटुतरः अस्ति। |
| हस्तिघोटकयोः मध्ये | प्रशस्यतरा अस्ति। |

२.रिक्तानि स्थानानि समुचितैः तरप्प्रत्ययान्तैः पदैः पूरयत–

(क) द्वयोः फलयोः मध्ये अहं .............. फलं खादामि।
(ख) अनयोः मनुष्ययोः मध्ये अयं मनुष्यः .............. अस्ति।
(ग) रामश्यामयोः मध्ये श्यामः .............. अस्ति।
(घ) एतयोः बालकयोः मध्ये कः .............. अस्ति।
(ङ) उष्ट्रघोटकयोः मध्ये घोटकः .............. भवति।
(च) उष्ट्रहस्तिनोः मध्ये हस्ती .............. भवति।

**एतेषु फलेषु एतत् फलं स्थूलतमम् अस्ति।**

**बालिकासु शकुन्तला सुन्दरितमा वर्तते।**
**बालिकासु रमा उन्नततमा वर्तते।**
**राम-श्याम-गोपालेषु रामः पटुतमः वर्तते।**
**तृतीयायाः कक्षायाः छात्रेषु रामः उच्चतमः वर्तते।**
**यानेषु विमानं शीघ्रतमम् भवति।**
**मनुष्येषु क्षत्रियः शूरतमः भवति।**
**पशुषु सिंहः शूरतमः भवति।**
**कविषु कालिदासः प्रसिद्धतमः अस्ति।**
**नाटकेषु अभिज्ञानशाकुन्तलं प्रसिद्धतमम् अस्ति।**

**पर्वतानां मध्ये हिमालयपर्वतः उच्चतमः वर्तते।**
**ताराग्रहेषु बृहस्पतिः स्थूलतमः वर्तते।**
**प्रायः ग्रीष्मर्तोः अन्ते दिवसः दीर्घतमः भवति।**
**प्रायः हेमन्तर्तोः अन्ते रात्रिः दीर्घतमा भवति।**
**स्थलचारिषु प्राणिषु हस्ती स्थूलतमः भवति।**
**जलचरेषु तिमिङ्गिलगिलः स्थूलतमः भवति।**
**भूमण्डले आढ्यतमः पुरुषः अमेरिकादेशे अस्ति।**
**वन्यपशुषु हस्ती बलवत्तमः भवति।**
**वन्यपशुषु चित्रकः शीघ्रतमः भवति।**

१.अधस्तनान् वाक्यांशान् यथौचिति मेलयित्वा प्रदर्शयत–

| (क) | (ख) |
|---|---|
| तृतीयायाः कक्षायाः छात्रेषु रामः | प्रसिद्धतमः अस्ति। |
| यानेषु विमानम् | शूरतमः भवति। |
| पशुषु सिंहः | उच्चतमः अस्ति। |
| कविषु कालिदासः | दीर्घतमः भवति। |
| ग्रीष्मर्तौ दिवसः | शीघ्रतमं भवति। |

२. रिक्तानि स्थानानि समुचितैः तमप्प्रत्ययान्तैः पदैः पूरयत–

(क) एतेषु फलेषु मध्ये अहं ............... फलं खादामि।
(ख) ताराग्रहेषु बृहस्पतिः ............... अस्ति।
(ग) पर्वतेषु हिमालयः ............... अस्ति।
(घ) हेमन्तर्तौ रात्रिः ............... भवति।
(ङ) नाटकेषु अभिज्ञानशाकुन्तलं ............... वर्तते।

# सामान्यनीतयः

मूर्खा यत्र सुगर्विष्ठा दान-मान-परिग्रहैः।
तस्मिन् देशे न वस्तव्यम् पण्डितेन कदाचन॥

पुंसो ये नाऽभिनन्दन्ति वृत्तेनाऽभिजनेन च।
न तेषु निवसेत् प्राज्ञश् श्रेयोर्थी पापबुद्धिषु॥

सद्भिस् सहाऽऽस्याङ् कुर्वीत सद्भिः कुर्वीत सङ्कथाम्।
कुर्वीत सङ्गतिं सद्भिर् नाऽसद्भिः किञ्चिदाचरेत्॥

बहूनामप्ययमित्राणार्यँ य इच्छेत् कर्तुमप्रियम्।
आत्मा तेन गुणैर् योज्ज्यस् तत् तेषाम् महदप्रियम्॥

विद्या वृत्तञ् च वित्तञ् च त्रीणि तेजांसि देहिनाम्।
इह चाऽमुत्र च श्श्रेयस् तेषान् तान्येव तन्वते॥

गतेऽपि वयसि ग्राह्य्या विद्या सर्वात्मना बुधैः।
इह चेत् स्यान् न फलदा सुलभा साऽन्यजन्मनि॥

वृत्तम् प्रयत्नतो रक्षेद् वित्तमायाति याति च।
अक्षीणो वित्ततः क्षीणो वृत्ततस् तु हतो हतः॥

शीलं रक्षतु मेधावी प्राप्तुमिच्छुस् सुखत्रयम्।
प्रशंसावँ वित्तलाभञ् चप्रेत्य स्वर्गे च मोदनम्॥

गजाश्ववहेमनिचयं रत्नराशिन् नगोपमम्।
अकीर्त्योपहतम् मुञ्चेत् सकलन् तृणवद् बुधः॥

मृदुनैव मृदुं हन्ति मृदुना हन्ति दारुणम्।
नाऽसाद्ध्यम् मृदुना किञ्चित् तस्मात् तीक्ष्णतरो मृदुः॥

धूर्तञ् चण्डं शठङ् क्रूरङ् कितवञ् चपलङ् खलम्।
पतितन् नास्तिकञ् जिह्म्मन् दूरतः परिवर्जयेत्॥

परित्याज्ज्यो बुधैः पापः कृतघ्नो निरपत्रपः।
मित्रद्द्रोही कुलाङ्गारो नीचकर्मा नराधमः॥

दुर्जनः परिहर्तव्व्यो विद्ययाऽलङ्कृतोऽपि सन्।
मणिना भूषितस् सर्पः किमसौ न भयङ्करः॥

# १. प्रातिपदिकरूपावलिः[१]

## १. अन्य-प्रातिपदिकस्य रूपाणि–

### पुलँलिङ्गे

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | अन्यः | अन्यौ (अन्या)[२] | अन्ये |
| द्वि.- | अन्यम् | अन्यौ (अन्या) | अन्यान् |
| तृ.- | अन्येन | अन्याभ्याम् | अन्यैः (अन्येभिः) |
| च.- | अन्यस्मै | अन्याभ्याम् | अन्येभ्यः |
| प.- | अन्यस्मात् | अन्याभ्याम् | अन्येभ्यः |
| ष.- | अन्यस्य | अन्ययोः | अन्येषाम् |
| स.- | अन्यस्मिन् | अन्ययोः | अन्येषु |
| सम्बो.- | अन्य | अन्यौ (अन्या) | अन्ये। |

### स्त्रीलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | अन्या | अन्ये | अन्याः |
| द्वि.- | अन्याम् | अन्ये | अन्याः |
| तृ.- | अन्यया | अन्याभ्याम् | अन्याभिः |
| च.- | अन्यस्यै | अन्याभ्याम् | अन्याभ्यः |
| प.- | अन्यस्याः | अन्याभ्याम् | अन्याभ्यः |
| ष.- | अन्यस्याः (अन्यस्यै) | अन्ययोः (अन्याभ्याम्) | अन्यासाम् (अन्याभ्यः) |
| स.- | अन्यस्याम् | अन्ययोः | अन्यासु |
| सम्बो.- | अन्ये | अन्ये | अन्याः। |

### नपुंसकलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | अन्यत् | अन्ये | अन्यानि (अन्या) |
| द्वि.- | अन्यत् | अन्ये | अन्यानि (अन्या) |
| तृ.- | अन्येन | अन्याभ्याम् | अन्यैः (अन्येभिः) |
| च.- | अन्यस्मै | अन्याभ्याम् | अन्येभ्यः |
| प.- | अन्यस्मात् | अन्याभ्याम् | अन्येभ्यः |
| ष.- | अन्यस्य | अन्ययोः | अन्येषाम् |
| स.- | अन्यस्मिन् | अन्ययोः | अन्येषु |
| सम्बो.- | अन्यत् | अन्ये | अन्यानि (अन्या)॥ |

## २. दातृ-प्रातिपदिकस्य रूपाणि–

### पुलँलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | दाता | दातारौ (दातारा) | दातारः |
| द्वि.- | दातारम् | दातारौ (दातारा) | दातॄन् (दातारः) |
| तृ.- | दात्रा | दातृभ्याम् | दातृभिः |
| च.- | दात्रे | दातृभ्याम् | दातृभ्यः |
| प.- | दातुः | दातृभ्याम् | दातृभ्यः |
| ष.- | दातुः | दात्रोः | दातॄणाम् (दातृणाम्) |
| स.- | दातरि | दात्रोः | दातृषु |
| सम्बो.- | दातः | दातारौ (दातारा) | दातारः। |

### स्त्रीलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | दात्री | दात्र्यौ (दात्र्या) | दात्र्यः (दात्रीः) |
| द्वि.- | दात्रीम् | दात्र्यौ (दात्र्या) | दात्रीः (दात्र्यः) |
| तृ.- | दात्र्या | दात्रीभ्याम् | दात्रीभिः |
| च.- | दात्र्यै | दात्रीभ्याम् | दात्रीभ्यः |
| प.- | दात्र्याः | दात्रीभ्याम् | दात्रीभ्यः |
| ष.- | दात्र्याः (दात्र्यै) | दात्र्योः (दात्रीभ्याम्) | दात्रीणाम् (दात्रीभ्यः) |
| स.- | दात्र्याम् | दात्र्योः | दात्रीषु |
| सम्बो.- | दात्रि | दात्र्यौ (दात्र्या) | दात्र्यः (दात्रीः)। |

### नपुंसकलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | दातृ | दातृणी | दातॄणि |
| द्वि.- | दातृ | दातृणी | दातॄणि |
| तृ.- | दात्रा, दातृणा | दातृभ्याम् | दातृभिः |
| च.- | दात्रे, दातृणे | दातृभ्याम् | दातृभ्यः |
| प.- | दातुः, दातृणः | दातृभ्याम् | दातृभ्यः |
| ष.- | दातुः, दातृणः | दात्रोः | दातॄणाम् (दातृणाम्) |
| स.- | दातरि, दातृणि | दात्रोः | दातृषु |
| सम्बो.- | दातः, दातृ | दातृणी | दातॄणि॥ |

---

१. अस्मद्, युष्मद्, बालक, बालिका, फल, किम् इत्येतेषां प्रातिपदिकानां रूपाणि प्रथमे पुस्तके परिशिष्टे; कवि, नदी, पशु, सर्व, तत्, एतत्, इदम्, अदस् इत्येतेषां प्रातिपदिकानां रूपाणि च द्वितीये पुस्तके परिशिष्टे प्रदर्शितानि सन्ति।

२. कोष्ठके दत्तानि रूपाणि वेदे एव प्रयुक्तानि ज्ञेयानि। अभ्यासे एतेषां स्वेच्छया परिग्रहस् त्यागो वा कार्यः।

### ३. स्वसृ-प्रातिपदिकस्य स्त्रीलिङ्गस्य रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | स्वसा | स्वसारौ (स्वसारा) | स्वसारः |
| द्वि.- | स्वसारम् | स्वसारौ (स्वसारा) | स्वसृः (स्वसृन्) |
| तृ.- | स्वस्रा | स्वसृभ्याम् | स्वसृभिः |
| च.- | स्वस्रे | स्वसृभ्याम् | स्वसृभ्यः |
| प.- | स्वसुः | स्वसृभ्याम् | स्वसृभ्यः |
| ष.- | स्वसुः (स्वस्रे) | स्वस्रोः (स्वसृभ्याम्) | स्वसृणाम् (स्वसृभ्यः) |
| स.- | स्वसरि | स्वस्रोः | स्वसृषु |
| सम्बो.- | स्वसः | स्वसारौ (स्वसारा) | स्वसारः। |

### ४. मातृ-प्रातिपदिकस्य स्त्रीलिङ्गस्य रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | माता | मातरौ (मातरा) | मातरः |
| द्वि.- | मातरम् | मातरौ (मातरा) | मातृः (मातृन्) |
| तृ.- | मात्रा | मातृभ्याम् | मातृभिः |
| च.- | मात्रे | मातृभ्याम् | मातृभ्यः |
| प.- | मातुः | मातृभ्याम् | मातृभ्यः |
| ष.- | मातुः (मात्रे) | मात्रोः (मातृवोः, मातृभ्याम्) | मातृणाम् (मातृभ्यः) |
| स.- | मातरि | मात्रोः (मातृवोः) | मातृषु |
| सम्बो.- | मातः | मातरौ (मातरा) | मातरः। |

### ५. भ्रातृ-प्रातिपदिकस्य पुल्लिँङ्गस्य रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | भ्राता | भ्रातरौ (भ्रातरा) | भ्रातरः |
| द्वि.- | भ्रातरम् | भ्रातरौ (भ्रातरा) | भ्रातृन् (भ्रातरः) |
| तृ.- | भ्रात्रा | भ्रातृभ्याम् | भ्रातृभिः |
| च.- | भ्रात्रे | भ्रातृभ्याम् | भ्रातृभ्यः |
| प.- | भ्रातुः | भ्रातृभ्याम् | भ्रातृभ्यः |
| ष.- | भ्रातुः | भ्रात्रोः | भ्रातृणाम् |
| स.- | भ्रातरि | भ्रात्रोः | भ्रातृषु |
| सम्बो - | भ्रातः | भ्रातरौ (भ्रातरा) | भ्रातरः। |

### ६. गो-प्रातिपदिकस्य पुल्लिँङ्गे स्त्रीलिङ्गे च रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | गौः | गावौ (गावा) | गावः |
| द्वि.- | गाम् | गावौ (गावा) | गाः |
| तृ.- | गवा | गोभ्याम् | गोभिः |
| च.- | गवे | गोभ्याम् | गोभ्यः |
| प.- | गोः | गोभ्याम् | गोभ्यः |
| ष.- | गोः | गवोः | गवाम् |
| स.- | गवि | गवोः | गोषु |
| सम्बो.- | गौः | गावौ (गावा) | गावः। |

### ७. यत्-प्रातिपदिकस्य रूपाणि–

पुल्लिँङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | यः | यौ (या) | ये |
| द्वि.- | यम् | यौ (या) | यान् |
| तृ.- | येन (येना) | याभ्याम् | यैः (येभिः, यात्) |
| च.- | यस्मै | याभ्याम् | येभ्यः |
| प.- | यस्मात् (यात्) | याभ्याम् | येभ्यः |
| ष.- | यस्य | ययोः (योः) | येषाम् |
| स.- | यस्मिन् | ययोः (योः) | येषु। |

स्त्रीलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | या | ये | याः |
| द्वि.- | याम् | ये | याः |
| तृ.- | यया | याभ्याम् | याभिः |
| च.- | यस्यै | याभ्याम् | याभ्यः |
| प.- | यस्याः | याभ्याम् | याभ्यः |
| ष.- | यस्याः (यस्यै) | ययोः (योः, याभ्याम्) | यासाम् (याभ्यः) |
| स.- | यस्याम् | ययोः (योः) | यासु। |

नपुंसकलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | यत् | ये | यानि (या, यात्) |
| द्वि.- | यत् | ये | यानि (या, यात्) |
| तृ.- | येन (येना) | याभ्याम् | यैः (येभिः, यात्) |
| च.- | यस्मै | याभ्याम् | येभ्यः |
| प.- | यस्मात् (यात्) | याभ्याम् | येभ्यः |
| ष.- | यस्य | ययोः (योः) | येषाम् |
| स.- | यस्मिन् | ययोः (योः) | येषु॥ |

### ८. पचत्-प्रातिपदिकस्य रूपाणि–

पुल्लिँङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | पचन् | पचन्तौ (पचन्ता) | पचन्तः |
| द्वि.- | पचन्तम् | पचन्तौ (पचन्ता) | पचतः |
| तृ.- | पचता | पचद्भ्याम् | पचद्भिः |
| च.- | पचते | पचद्भ्याम् | पचद्भ्यः |
| प.- | पचतः | पचद्भ्याम् | पचद्भ्यः |
| ष.- | पचतः | पचतोः | पचताम् |
| स.- | पचति | पचतोः | पचत्सु |
| सम्बो.- | पचन् | पचन्तौ (पचन्ता) | पचन्तः। |

स्त्रीलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | पचन्ती | पचन्त्यौ (पचन्त्या, पचन्ती) | पचन्त्यः (पचन्तयः, पचन्तीः) |
| द्वि.- | पचन्तीम् (पचन्त्यम्) | पचन्त्यौ (पचन्त्या, पचन्ती) | पचन्तीः (पचन्त्यः) |
| तृ.- | पचन्त्या (पचन्तिया) | पचन्तीभ्याम् | पचन्तीभिः |
| च.- | पचन्त्यै | पचन्तीभ्याम् | पचन्तीभ्यः |
| प.- | पचन्त्याः (पचन्तियाः) | पचन्तीभ्याम् | पचन्तीभ्यः |
| ष.- | पचन्त्याः (पचन्त्यै) | पचन्त्योः (पचन्तियोः, पचन्तीभ्याम्) | पचन्तीनाम् (पचन्तीभ्यः) |
| स.- | पचन्त्याम् (पचन्तियाम्, पचन्ती) | पचन्त्योः (पचन्तियोः) | पचन्तीषु |
| सम्बो.- | पचन्ति | पचन्त्यौ (पचन्त्या, पचन्ती) | पचन्त्यः (पचन्तयः, पचन्तीः)। |

नपुंसकलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | पचत् | पचन्ती | पचन्ति |
| द्वि.- | पचत् | पचन्ती | पचन्ति |
| तृ.- | पचता | पचद्भ्याम् | पचद्भिः |
| च.- | पचते | पचद्भ्याम् | पचद्भ्यः |
| प.- | पचतः | पचद्भ्याम् | पचद्भ्यः |
| ष.- | पचतः | पचतोः | पचताम् |
| स.- | पचति | पचतोः | पचत्सु |
| सम्बो.- | पचत् | पचन्ती | पचन्ति॥ |

### ९. बलवत्-प्रातिपदिकस्य रूपाणि –

पुंल्लिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | बलवान् | बलवन्तौ (बलवन्ता) | बलवन्तः |
| द्वि.- | बलवन्तम् | बलवन्तौ (बलवन्ता) | बलवतः |
| तृ.- | बलवता | बलवद्भ्याम् | बलवद्भिः |
| च.- | बलवते | बलवद्भ्याम् | बलवद्भ्यः |
| प.- | बलवतः | बलवद्भ्याम् | बलवद्भ्यः |
| ष.- | बलवतः | बलवतोः | बलवताम् |
| स.- | बलवति | बलवतोः | बलवत्सु |
| सम्बो.- | बलवन् (बलवः) | बलवन्तौ (बलवन्ता) | बलवन्तः। |

स्त्रीलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | बलवती | बलवत्यौ (बलवत्या) | बलवत्यः (बलवतीः) |
| द्वि.- | बलवतीम् | बलवत्यौ (बलवत्या) | बलवतीः (बलवत्यः) |
| तृ.- | बलवत्या | बलवतीभ्याम् | बलवतीभिः |
| च.- | बलवत्यै | बलवतीभ्याम् | बलवतीभ्यः |
| प.- | बलवत्याः | बलवतीभ्याम् | बलवतीभ्यः |
| ष.- | बलवत्याः (बलवत्यै) | बलवत्योः (बलवतीभ्याम्) | बलवतीनाम् (बलवतीभ्यः) |
| स.- | बलवत्याम् | बलवत्योः | बलवतीषु |
| सम्बो.- | बलवति | बलवत्यौ (बलवत्या) | बलवत्यः (बलवतीः)। |

नपुंसकलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | बलवत् | बलवती | बलवन्ति |
| द्वि.- | बलवत् | बलवती | बलवन्ति |
| तृ.- | बलवता | बलवद्भ्याम् | बलवद्भिः |
| च.- | बलवते | बलवद्भ्याम् | बलवद्भ्यः |
| प.- | बलवतः | बलवद्भ्याम् | बलवद्भ्यः |
| ष.- | बलवतः | बलवतोः | बलवताम् |
| स.- | बलवति | बलवतोः | बलवत्सु |
| सम्बो.- | बलवत् (बलवः) | बलवती | बलवन्ति॥ |

### १०. धनिन्-प्रातिपदिकस्य रूपाणि –

पुंल्लिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | धनी | धनिनौ (धनिना) | धनिनः |
| द्वि.- | धनिनम् | धनिनौ (धनिना) | धनिनः |
| तृ.- | धनिना | धनिभ्याम् | धनिभिः |
| च.- | धनिने | धनिभ्याम् | धनिभ्यः |
| प.- | धनिनः | धनिभ्याम् | धनिभ्यः |
| ष.- | धनिनः | धनिनोः | धनिनाम् |
| स.- | धनिनि | धनिनोः | धनिषु |
| सम्बो.- | धनिन् | धनिनौ (धनिना) | धनिनः। |

स्त्रीलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | धनिनी | धनिन्यौ (धनिन्या) | धनिन्यः (धनिनीः) |
| द्वि.- | धनिनीम् | धनिन्यौ (धनिन्या) | धनिनीः (धनिन्यः) |
| तृ.- | धनिन्या | धनिनीभ्याम् | धनिनीभिः |
| च.- | धनिन्यै | धनिनीभ्याम् | धनिनीभ्यः |
| प.- | धनिन्याः | धनिनीभ्याम् | धनिनीभ्यः |
| ष.- | धनिन्याः (धनिन्यै) | धनिन्योः (धनिनीभ्याम्) | धनिनीनाम् (धनिनीभ्यः) |
| स.- | धनिन्याम् | धनिन्योः | धनिनीषु |
| सम्बो.- | धनिनि | धनिन्यौ (धनिन्या) | धनिन्यः (धनिनीः)। |

नपुंसकलिङ्गे-

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | धनि | धनिनी | धनीनि |
| द्वि.- | धनि | धनिनी | धनीनि |
| तृ.- | धनिना | धनिभ्याम् | धनिभिः |
| च.- | धनिने | धनिभ्याम् | धनिभ्यः |
| प.- | धनिनः | धनिभ्याम् | धनिभ्यः |
| ष.- | धनिनः | धनिनोः | धनिनाम् |
| स.- | धनिनि | धनिनोः | धनिषु |
| सम्बो.- | धनि | धनिनी | धनीनि॥ |

### ११. नामन्-प्रातिपदिकस्य नपुंसकलिङ्गस्य रूपाणि –

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | नाम | नाम्नी, नामनी | नामानि |
| द्वि.- | नाम | नाम्नी, नामनी | नामानि |
| तृ.- | नाम्ना | नामभ्याम् | नामभिः |
| च.- | नाम्ने | नामभ्याम् | नामभ्यः |
| प.- | नाम्नः | नामभ्याम् | नामभ्यः |
| ष.- | नाम्नः | नाम्नोः | नाम्नाम् |
| स.- | नाम्नि, नामनि (नामन्) | नाम्नोः | नामसु |
| सम्बो.- | नाम, नामन् | नाम्नी, नामनी | नामानि। |

### १२. वासस्-प्रातिपदिकस्य नपुंसकलिङ्गस्य रूपाणि –

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| प्र.- | वासः | वाससी | वासांसि |
| द्वि.- | वासः | वाससी | वासांसि |
| तृ.- | वाससा | वासोभ्याम् | वासोभिः |
| च.- | वाससे | वासोभ्याम् | वासोभ्यः |
| प.- | वाससः | वासोभ्याम् | वासोभ्यः |
| ष.- | वाससः | वाससोः | वाससाम् |
| स.- | वाससि | वाससोः | वासस्सु |
| सम्बो.- | वासः | वाससी | वासांसि। |

### १३. संख्यावाचकस्य एक-प्रातिपदिकस्य रूपाणि –

| | पुंल्लिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| प्र.- | एकः | एका | एकम् |
| द्वि.- | एकम् | एकाम् | एकम् |
| तृ.- | एकेन | एकया | एकेन |
| च.- | एकस्मै | एकस्यै | एकस्मै |
| प.- | एकस्मात् | एकस्याः | एकस्मात् |
| ष.- | एकस्य | एकस्याः (एकस्यै) | एकस्य |
| स.- | एकस्मिन्। | एकस्याम्। | एकस्मिन्॥ |

### १४. नित्यद्विवचनान्तस्य द्वि-प्रातिपदिकस्य रूपाणि –

| | पुंल्लिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| प्र.- | द्वौ (द्वा) | द्वे | द्वे (द्वम्) |
| द्वि.- | द्वौ (द्वा) | द्वे | द्वे (द्वम्) |
| तृ.- | द्वाभ्याम् | द्वाभ्याम् | द्वाभ्याम् |
| च.- | द्वाभ्याम् | द्वाभ्याम् | द्वाभ्याम् |
| प.- | द्वाभ्याम् | द्वाभ्याम् | द्वाभ्याम् |
| ष.- | द्वयोः | द्वयोः | द्वयोः |
| स.- | द्वयोः। | द्वयोः। | द्वयोः॥ |

### १५. नित्यबहुवचनान्तस्य त्रि-प्रातिपदिकस्य रूपाणि –

| | पुंल्लिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| प्र.- | त्रयः | तिस्रः | त्रीणि (त्री) |
| द्वि.- | त्रीन् | तिस्रः | त्रीणि (त्री) |
| तृ.- | त्रिभिः | तिसृभिः | त्रिभिः |
| च.- | त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| प.- | त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| ष.- | त्रयाणाम् (त्रीणाम्) | तिसृणाम् | त्रयाणाम् (त्रीणाम्) |
| स.- | त्रिषु | तिसृषु | त्रिषु |
| सम्बो.- | त्रयः। | तिस्रः। | त्रीणि (त्री)॥ |

### १६. नित्यबहुवचनान्तस्य चतुर्-प्रातिपदिकस्य रूपाणि-

| | पुंल्लिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| प्र.- | चत्वारः | चतस्रः | चत्वारि |
| द्वि.- | चतुरः | चतस्रः | चत्वारि |
| तृ.- | चतुर्भिः | चतसृभिः | चतुर्भिः |
| च.- | चतुर्भ्यः | चतसृभ्यः | चतुर्भ्यः |
| प.- | चतुर्भ्यः | चतसृभ्यः | चतुर्भ्यः |
| ष.- | चतुर्णाम् | चतसृणाम् | चतुर्णाम् |
| स.- | चतुर्षु | चतसृषु | चतुर्षु |
| सम्बो.- | चत्वारः। | चतस्रः। | चत्वारि॥ |

### १७. नित्यबहुवचनान्तस्य पञ्चन्-प्रातिपदिकस्य रूपाणि-

| | पुंल्लिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| प्र.- | पञ्च | पञ्च | पञ्च |
| द्वि.- | पञ्च | पञ्च | पञ्च |
| तृ.- | पञ्चभिः | पञ्चभिः | पञ्चभिः |
| च.- | पञ्चभ्यः | पञ्चभ्यः | पञ्चभ्यः |
| प.- | पञ्चभ्यः | पञ्चभ्यः | पञ्चभ्यः |
| ष.- | पञ्चानाम् | पञ्चानाम् | पञ्चानाम् |
| स - | पञ्चसु | पञ्चसु | पञ्चसु |
| सम्बो.- | पञ्च। | पञ्च। | पञ्च॥ |

### १८. नित्यबहुवचनान्तस्य षष्-प्रातिपदिकस्य रूपाणि-

| | पुंल्लिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| प्र.- | षट् | षट् | षट् |
| द्वि - | षट् | षट् | षट् |
| तृ.- | षड्भिः | षड्भिः | षड्भिः |
| च.- | षड्भ्यः | षड्भ्यः | षड्भ्यः |
| प.- | षड्भ्यः | षड्भ्यः | षड्भ्यः |
| ष.- | षण्णाम् | षण्णाम् | षण्णाम् |
| स.- | षट्सु | षट्सु | षट्सु |
| सम्बो.- | षट्। | षट्। | षट्॥ |

# २. धातुरूपावलिः

## १. 'भू सत्तायाम्' इत्यस्य परस्मैपदिनो धातोः कर्तरि लकारे रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| १ लटि– | | | |
| प्र.- | भवति | भवतः | भवन्ति |
| म.- | भवसि | भवथः | भवथ |
| उ.- | भवामि | भवावः | भवामः (भवामसि)। |
| २. लुङि– | | | |
| प्र.- | अभूत् | अभूताम्(अभूथाम्) | अभूवन् |
| म.- | अभूः (अभुव.) | अभूतम् | अभूत (अभूतन) |
| उ.- | अभूवम् (अभूम) | अभूव | अभूम। |
| ३. लङि– | | | |
| प्र.- | अभवत् | अभवताम् | अभवन् |
| म.- | अभवः | अभवतम् | अभवत |
| उ.- | अभवम् | अभवाव | अभवाम। |
| ४. लिटि– | | | |
| प्र.- | बभूव | बभूवतुः | बभूवुः |
| म.- | बभूविथ | बभूवथुः | बभूव |
| उ.- | बभूव | बभूविव | बभूविम। |
| ५. लृटि– | | | |
| प्र.- | भविष्यति | भविष्यतः | भविष्यन्ति |
| म.- | भविष्यसि | भविष्यथः | भविष्यथ |
| उ.- | भविष्यामि | भविष्यावः | भविष्यामः (भविष्यामसि)। |
| ६. लुटि– | | | |
| प्र.- | भविता | भवितारौ | भवितारः |
| म.- | भवितासि | भवितास्थः | भवितास्थ |
| उ.- | भवितास्मि | भवितास्वः | भवितास्मः (भवितास्मसि)। |
| ७ विध्यादिलिङि– | | | |
| प्र.- | भवेत् | भवेताम् | भवेयुः |
| म.- | भवेः | भवेतम् | भवेत |
| उ.- | भवेयम् | भवेव | भवेम। |
| ८. आशीर्लिङि– | | | |
| प्र.- | भूयात् | भूयास्ताम् | भूयासुः |
| म.- | भूयाः | भूयास्तम् | भूयास्त |
| उ.- | भूयासम् | भूयास्व | भूयास्म। |
| ९. लोटि– | | | |
| प्र.- | भवतु(भूतु)-भवतात् | भवताम् (भूताम्) | भवन्तु |
| म.- | भव(भवा)-भवतात् | भवतम् (भूतम्) | भवत(भवता, भवतन, भवथन) |
| उ.- | भवानि (भवा) | भवाव | भवाम। |
| १०. लृङि– | | | |
| प्र.- | अभविष्यत् | अभविष्यताम् | अभविष्यन् |
| म.- | अभविष्यः | अभविष्यतम् | अभविष्यत |
| उ.- | अभविष्यम् | अभविष्याव | अभविष्याम। |

## २. 'जि जये' इत्यस्य 'जि अभिभवे' इत्यस्य वा परस्मैपदिनो धातोः कर्तरि लकारे रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| १. लटि– | | | |
| प्र.- | जयति | जयतः | जयन्ति |
| म.- | जयसि | जयथः | जयथ |
| उ.- | जयामि | जयावः | जयामः (जयामसि)। |
| २. लुङि– | | | |
| प्र.- | अजैषीत् | अजैष्टाम् | अजैषुः |
| म.- | अजैषीः | अजैष्टम् | अजैष्ट |
| उ.- | अजैषम् | अजैष्व | अजैष्म। |
| ३. लङि– | | | |
| प्र.- | अजयत् | अजयताम् | अजयन् |
| म.- | अजयः | अजयतम् | अजयत |
| उ.- | अजयम् | अजयाव | अजयाम। |
| ४. लिटि– | | | |
| प्र.- | जिगाय | जिग्यतुः | जिग्युः |
| म.- | जिगयिथ-जिगेथ | जिग्यथुः | जिग्य |
| उ.- | जिगाय-जिगय | जिग्यिव | जिग्यिम। |
| ५. लृटि– | | | |
| प्र.- | जेष्यति | जेष्यतः | जेष्यन्ति |
| म.- | जेष्यसि | जेष्यथः | जेष्यथ |
| उ.- | जेष्यामि | जेष्यावः | जेष्यामः (जेष्यामसि)। |
| ६. लुटि– | | | |
| प्र.- | जेता | जेतारौ | जेतारः |
| म.- | जेतासि | जेतास्थः | जेतास्थ |
| उ.- | जेतास्मि | जेतास्वः | जेतास्मः (जेतास्मसि)। |
| ७. विध्यादिलिङि– | | | |
| प्र.- | जयेत् | जयेताम् | जयेयुः |
| म.- | जयेः | जयेतम् | जयेत |
| उ.- | जयेयम् | जयेव | जयेम। |
| ८. आशीर्लिङि– | | | |
| प्र.- | जीयात् | जीयास्ताम् | जीयासुः |
| म.- | जीयाः | जीयास्तम् | जीयास्त |
| उ.- | जीयासम् | जीयास्व | जीयास्म। |
| ९. लोटि– | | | |
| प्र.- | जयतु-जयतात् | जयताम् | जयन्तु |
| म.- | जय(जया)-जयतात् | जयतम् | जयत(जयता, जयतन, जयथन) |
| उ.- | जयानि | जयाव | जयाम। |
| १०. लृङि – | | | |
| प्र.- | अजेष्यत् | अजेष्यताम् | अजेष्यन् |
| म.- | अजेष्यः | अजेष्यतम् | अजेष्यत |
| उ.- | अजेष्यम् | अजेष्याव | अजेष्याम। |

## ३. ‘दृशिर् प्रेक्षणे’ इत्यस्य परस्मैपदिनो धात्तोः कर्तरि लकारे रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| १. लटि– | | | |
| प्र.- | पश्यति | पश्यतः | पश्यन्ति |
| म.- | पश्यसि | पश्यथः | पश्यथ |
| उ.- | पश्यामि | पश्यावः | पश्यामः (पश्यामसि)। |
| २. लुङि– | | | |
| प्र.- | अदर्शत् (अदर्शत) | अदर्शताम् | अदर्शन् (अदृशन्, अदृश्रन्) |
| म.- | अदर्शः | अदर्शतम् | अदर्शत |
| उ.- | अदर्शम् | अदर्शाव | अदर्शाम (अदर्शम, अदृशम)। |
| पक्षान्तरे– | | | |
| प्र.- | अद्राक्षीत् (अद्राक्) | अद्राष्टाम् | अद्राक्षुः |
| म.- | अद्राक्षीः | अद्राष्टम् | अद्राष्ट |
| उ.- | अद्राक्षम् | अद्राक्ष्व | अद्राक्ष्म। |
| ३. लङि– | | | |
| प्र.- | अपश्यत् | अपश्यताम् | अपश्यन् |
| म.- | अपश्यः | अपश्यतम् | अपश्यत |
| उ.- | अपश्यम् | अपश्याव | अपश्याम। |
| ४. लिटि– | | | |
| प्र.- | ददर्श | ददृशतुः | ददृशुः |
| म.- | ददर्शिथ-दद्रष्ठ | ददृशथुः | ददृश |
| उ.- | ददर्श | ददृशिव | ददृशिम। |
| ५. लृटि– | | | |
| प्र.- | द्रक्ष्यति | द्रक्ष्यतः | द्रक्ष्यन्ति |
| म.- | द्रक्ष्यसि | द्रक्ष्यथः | द्रक्ष्यथ |
| उ.- | द्रक्ष्यामि | द्रक्ष्यावः | द्रक्ष्यामः (द्रक्ष्यामसि)। |
| ६. लुटि– | | | |
| प्र.- | द्रष्टा | द्रष्टारौ | द्रष्टारः |
| म.- | द्रष्टासि | द्रष्टास्थः | द्रष्टास्थ |
| उ.- | द्रष्टास्मि | द्रष्टास्वः | द्रष्टास्मः (द्रष्टास्मसि)। |
| ७. विध्यादिलिङि– | | | |
| प्र.- | पश्येत् | पश्येताम् | पश्येयुः |
| म.- | पश्येः | पश्येतम् | पश्येत |
| उ.- | पश्येयम् | पश्येव | पश्येम। |
| ८. आशीर्लिङि– | | | |
| प्र.- | दृश्यात् | दृश्यास्ताम् | दृश्यासुः |
| म.- | दृश्याः | दृश्यास्तम् | दृश्यास्त |
| उ.- | दृश्यासम् | दृश्यास्व | दृश्यास्म। |
| ९. लोटि– | | | |
| प्र.- | पश्यतु-पश्यतात् | पश्यताम् | पश्यन्तु |
| म.- | पश्य (पश्यस्व, पश्याहि) पश्यतात् | पश्यतम् | पश्यत |
| उ.- | पश्यानि (पश्या) | पश्याव | पश्याम। |
| १०. लृङि– | | | |
| प्र.- | अद्रक्ष्यत् | अद्रक्ष्यताम् | अद्रक्ष्यन् |
| म.- | अद्रक्ष्यः | अद्रक्ष्यतम् | अद्रक्ष्यत |
| उ.- | अद्रक्ष्यम् | अद्रक्ष्याव | अद्रक्ष्याम। |

## ४. ‘अद भक्षणे’ इत्यस्य परस्मैपदिनो धात्तोः कर्तरि लकारे रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| १. लटि– | | | |
| प्र.- | अत्ति | अत्तः | अदन्ति |
| म.- | अत्सि | अत्थः | अत्थ |
| उ.- | अद्मि | अद्वः | अद्मः (अद्मसि)। |
| २. लुङि– | | | |
| प्र.- | अघसत् (अघत्) | अघसताम् | अघसन् (अक्षन्) |
| म.- | अघसः (अघः) | अघसतम् | अघसत |
| उ.- | अघसम् | अघसाव | अघसाम। |
| ३. लङि– | | | |
| प्र.- | आदत् | आत्ताम् | आदन् |
| म.- | आदः | आत्तम् | आत्त |
| उ.- | आदम् | आद्व | आद्म। |
| ४. लिटि– | | | |
| प्र.- | जघास | जक्षतुः | जक्षुः |
| म.- | जघसिथ | जक्षथुः | जक्ष |
| उ.- | जघास-जघस | जक्षिव | जक्षिम। |
| पक्षान्तरे– | | | |
| प्र.- | आद | आदतुः | आदुः |
| म.- | आदिथ | आदथुः | आद |
| उ.- | आद | आदिव | आदिम। |
| ५. लृटि– | | | |
| प्र.- | अत्स्यति | अत्स्यतः | अत्स्यन्ति |
| म.- | अत्स्यसि | अत्स्यथः | अत्स्यथ |
| उ.- | अत्स्यामि | अत्स्यावः | अत्स्यामः (अत्स्यामसि)। |
| ६. लुटि– | | | |
| प्र.- | अत्ता | अत्तारौ | अत्तारः |
| म.- | अत्तासि | अत्तास्थः | अत्तास्थ |
| उ.- | अत्तास्मि | अत्तास्वः | अत्तास्मः (अत्तास्मसि)। |
| ७. विध्यादिलिङि– | | | |
| प्र.- | अद्यात् | अद्याताम् | अद्युः |
| म.- | अद्याः | अद्यातम् | अद्यात |
| उ.- | अद्याम् | अद्याव | अद्याम। |
| ८. आशीर्लिङि– | | | |
| प्र.- | अद्यात् | अद्यास्ताम् | अद्यासुः |
| म.- | अद्याः | अद्यास्तम् | अद्यास्त |
| उ.- | अद्यासम् | अद्यास्व | अद्यास्म। |
| ९. लोटि– | | | |
| प्र.- | अत्तु (घस्तु)-अत्तात् | अत्ताम् (घस्ताम्) | अदन्तु (घसन्तु) |
| म.- | अद्धि (जग्धि)-अत्तात् | अत्तम् | अत्त (अत्त, अत्तात्, अत्तन, अत्थन) |
| उ.- | अदानि | अदाव | अदाम। |
| १० लृङि– | | | |
| प्र.- | आत्स्यत् | आत्स्यताम् | आत्स्यन् |
| म.- | आत्स्यः | आत्स्यतम् | आत्स्यत |
| उ.- | आत्स्यम् | आत्स्याव | आत्स्याम। |

## ५. 'शीङ् स्वप्ने' इत्यस्य आत्मनेपदिनो धातोः कर्तरि लकारे रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| १. लटि– | | | |
| प्र.- | शेते (शयते, शये) | शयाते | शेरते (शेरे, शयन्ति) |
| म.- | शेषे | शयाथे | शेध्वे (शयध्वे) |
| उ.- | शये | शेवहे | शेमहे। |
| २. लुङि– | | | |
| प्र.- | अशयिष्ट | अशयिषाताम् | अशयिषत |
| म.- | अशयिष्ठाः | अशयिषाथाम् | अशयिढ्वम्-अशयिध्वम् |
| उ.- | अशयिषि | अशयिष्वहि | अशयिष्महि। |
| ३ लङि– | | | |
| प्र.- | अशेत (अशयत्) | अशयाताम् | अशेरत |
| म.- | अशेथाः | अशयाथाम् | अशेध्वम् |
| उ.- | अशयि | अशेवहि | अशेमहि। |
| ४. लिटि– | | | |
| प्र.- | शिश्ये | शिश्याते | शिश्यिरे |
| म.- | शिश्यिषे | शिश्याथे | शिश्यिढ्वे-शिश्यिध्वे |
| उ.- | शिश्ये | शिश्यिवहे | शिश्यिमहे। |
| ५. लृटि– | | | |
| प्र.- | शयिष्यते | शयिष्येते | शयिष्यन्ते |
| म.- | शयिष्यसे | शयिष्येथे | शयिष्यध्वे |
| उ.- | शयिष्ये | शयिष्यावहे | शयिष्यामहे। |
| ६. लुटि– | | | |
| प्र.- | शयिता | शयितारौ | शयितारः |
| म.- | शयितासे | शयितासाथे | शयिताध्वे |
| उ.- | शयिताहे | शयितास्वहे | शयितास्महे। |
| ७. विध्यादिलिङि– | | | |
| प्र.- | शयीत | शयीयाताम् | शयीरन् |
| म.- | शयीथाः | शयीयाथाम् | शयीध्वम् |
| उ.- | शयीय | शयीवहि | शयीमहि। |
| ८. आशीर्लिङि– | | | |
| प्र.- | शयिषीष्ट | शयिषीयास्ताम् | शयिषीरन् |
| म.- | शयिषीष्ठाः | शयिषीयास्थाम् | शयिषीढ्वम्-शयिषीध्वम् |
| उ.- | शयिषीय | शयिषीवहि | शयिषीमहि। |
| ९. लोटि– | | | |
| प्र.- | शेताम् (शयाम्) | शयाताम् | शेरताम् |
| म.- | शेष्व | शयाथाम् | शेध्वम् |
| उ.- | शयै | शयावहै | शयामहै। |
| १०. लृङि– | | | |
| प्र.- | अशयिष्यत | अशयिष्येताम् | अशयिष्यन्त |
| म.- | अशयिष्यथाः | अशयिष्येथाम् | अशयिष्यध्वम् |
| उ.- | अशयिष्ये | अशयिष्यावहि | अशयिष्यामहि। |

## ६. 'अस भुवि' इत्यस्य परस्मैपदिनो धातोः कर्तरि लकारे रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| १. लटि– | | | |
| प्र.- | अस्ति | स्तः | सन्ति |
| म.- | असि | स्थः | स्थ (स्था) |
| उ.- | अस्मि | स्वः | स्मः (स्मसि)। |
| २. लुङि– | | | |
| प्र.- | अभूत् | अभूताम् (अभूथाम्) | अभूवन् (अभुवन्) |
| म.- | अभूः (अभुवः) | अभूतम् | अभूत (अभूतन, अभूथन) |
| उ.- | अभूवम् (अभूम्) | अभूव | अभूम। |
| ३. लङि– | | | |
| प्र.- | आसीत् (आः) | आस्ताम् | आसन् |
| म.- | आसीः | आस्तम् | आस्त |
| उ.- | आसम् | आस्व | आस्म। |
| ४ लिटि– | | | |
| प्र.- | बभूव | बभूवतुः | बभूवुः |
| म.- | बभूविथ (बभूथ) | बभूवथुः | बभूव |
| उ.- | बभूव | बभूविव | बभूविम। |
| ५. लृटि– | | | |
| प्र.- | भविष्यति | भविष्यतः | भविष्यन्ति |
| म.- | भविष्यसि | भविष्यथः | भविष्यथ |
| उ.- | भविष्यामि | भविष्यावः | भविष्यामः (भविष्यामसि)। |
| ६. लुटि– | | | |
| प्र.- | भविता | भवितारौ | भवितारः |
| म.- | भवितासि | भवितास्थः | भवितास्थ |
| उ.- | भवितास्मि | भवितास्वः | भवितास्मः (भवितास्मसि)। |
| ७. विध्यादिलिङि– | | | |
| प्र.- | स्यात् | स्याताम् | स्युः |
| म.- | स्याः | स्यातम् | स्यात (स्यातन) |
| उ.- | स्याम् | स्याव | स्याम। |
| ८. आशीर्लिङि– | | | |
| प्र.- | भूयात् (बभूयात्) | भूयास्ताम् | भूयासुः |
| म.- | भूयाः (बभूयाः) | भूयास्तम् | भूयास्त (भूयास्थ) |
| उ.- | भूयासम् | भूयास्व | भूयास्म (भूयाम)। |
| ९. लोटि– | | | |
| प्र.- | अस्तु-स्तात् | स्ताम् | सन्तु |
| म.- | एधि (एहि)-स्तात् | स्तम् | स्त (स्ता, स्तात्, स्तन, स्थन) |
| उ.- | असानि | असाव | असाम। |
| १०. लृङि– | | | |
| प्र.- | अभविष्यत् | अभविष्यताम् | अभविष्यन् |
| म.- | अभविष्यः | अभविष्यतम् | अभविष्यत |
| उ.- | अभविष्यम् | अभविष्याव | अभविष्याम। |

## ७. 'हु दानादनयोः' इत्यस्य परस्मैपदिनो धातोः कर्तरि लकारे रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| १. लटि– | | | |
| प्र.- | जुहोति (जुहुते) | जुहुतः | जुह्वति |
| म.- | जुहोषि | जुहुथः | जुहुथ |
| उ.- | जुहोमि (जुह्वे) | जुहुवः | जुहुमः (जुहुमसि)। |
| २. लुङि– | | | |
| प्र.- | अहौषीत् | अहौष्टाम् | अहौषुः |
| म.- | अहौषीः | अहौष्टम् | अहौष्ट |
| उ.- | अहौषम् | अहौष्व | अहौष्म। |
| ३. लङि– | | | |
| प्र.- | अजुहोत् | अजुहुताम् | अजुहवुः |
| म.- | अजुहोः | अजुहुतम् | अजुहुत |
| उ.- | अजुहवम् | अजुहुव | अजुहुम। |
| ४. लिटि–[1] | | | |
| प्र.- | जुहाव | जुहुवतुः | जुहुवुः (जुह्विरे, जुहुरे) |
| म.- | जुहविथ-जुहोथ | जुहुवथुः | जुहुव |
| उ.- | जुहाव-जुहव | जुहुविव | जुहुविम। |
| ५. लृटि– | | | |
| प्र.- | होष्यति | होष्यतः | होष्यन्ति |
| म.- | होष्यसि | होष्यथः | होष्यथ |
| उ.- | होष्यामि | होष्यावः | होष्यामः (होष्यामसि)। |
| ६. लुटि– | | | |
| प्र.- | होता | होतारौ | होतारः |
| म.- | होतासि | होतास्थः | होतास्थ |
| उ.- | होतास्मि | होतास्वः | होतास्मः (होतास्मसि)। |
| ७. विध्यादिलिङि– | | | |
| प्र.- | जुहुयात् | जुहुयाताम् | जुहुयुः |
| म.- | जुहुयाः | जुहुयातम् | जुहुयात |
| उ.- | जुहुयाम् | जुहुयाव | जुहुयाम। |
| ८. आशीर्लिङि– | | | |
| प्र.- | हूयात् | हूयास्ताम् | हूयासुः |
| म.- | हूयाः | हूयास्तम् | हूयास्त |
| उ.- | हूयासम् | हूयास्व | हूयास्म। |
| ९. लोटि– | | | |
| प्र.- | जुहोतु-जुहुतात् | जुहुताम् | जुह्वतु |
| म.- | जुहुधि (जुहुष्व)-जुहुतात् | जुहुतम् | जुहुत (जुहोत, जुहोतन, जुहोथन) |
| उ.- | जुहवानि | जुहवाव | जुहवाम (जुहवामहे)। |
| १०. लृङि– | | | |
| प्र.- | अहोष्यत् | अहोष्यताम् | अहोष्यन् |
| म.- | अहोष्यः | अहोष्यतम् | अहोष्यत |
| उ.- | अहोष्यम् | अहोष्याव | अहोष्याम। |

१. जुहवाञ्चकार इत्यादीनि, जुहवाम्बभूव इत्यादीनि जुहवामास इत्यादीनि च रूपाणि ज्ञेयानि।

## ८. '(ञि) भी भये' इत्यस्य परस्मैपदिनो धातोः कर्तरि लकारे रूपाणि–

| | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|
| १. लटि– | | | |
| प्र.- | बिभेति | बिभितः-बिभीतः | बिभ्यति |
| म.- | बिभेषि | बिभिथः-बिभीथः | बिभिथ-बिभीथ |
| उ.- | बिभेमि | बिभिवः-बिभीवः | बिभिमः-बिभीमः (बिभिमसि, बिभीमसि)। |
| २. लुङि– | | | |
| प्र.- | अभैषीत् | अभैष्टाम् | अभैषुः |
| म.- | अभैषीः (अभैः) | अभैष्टम् | अभैष्ट |
| उ.- | अभैषम् | अभैष्व | अभैष्म। |
| ३. लङि– | | | |
| प्र.- | अबिभेत् | अबिभिताम्-अबिभीताम् | अबिभयुः |
| म.- | अबिभेः | अबिभितम्-अबिभीतम् | अबिभित-अबिभीत |
| उ.- | अबिभयम् | अबिभिव-अबिभीव | अबिभिम-अबिभीम। |
| ४. लिटि–[2] | | | |
| प्र.- | बिभाय | बिभ्यतुः | बिभ्युः |
| म.- | बिभयिथ-बिभेथ | बिभ्यथुः | बिभ्य |
| उ.- | बिभाय-बिभय | बिभ्यिव | बिभ्यिम। |
| ५. लृटि– | | | |
| प्र.- | भेष्यति | भेष्यतः | भेष्यन्ति |
| म.- | भेष्यसि | भेष्यथः | भेष्यथ |
| उ.- | भेष्यामि | भेष्यावः | भेष्यामः (भेष्यामसि)। |
| ६. लुटि– | | | |
| प्र.- | भेता | भेतारौ | भेतारः |
| म.- | भेतासि | भेतास्थः | भेतास्थ |
| उ.- | भेतास्मि | भेतास्वः | भेतास्मः (भेतास्मसि)। |
| ७. विध्यादिलिङि– | | | |
| प्र.- | बिभियात्-बिभीयात् | बिभियाताम्-बिभीयाताम् | बिभियुः-बिभीयुः |
| म.- | बिभियाः-बिभीयाः | बिभियातम्-बिभीयातम् | बिभियात-बिभीयात |
| उ.- | बिभियाम्-बिभीयाम् | बिभियाव-बिभीयाव | बिभियाम-बिभीयाम। |
| ८. आशीर्लिङि– | | | |
| प्र.- | भीयात् | भीयास्ताम् | भीयासुः |
| म.- | भीयाः | भीयास्तम् | भीयास्त |
| उ.- | भीयासम् | भीयास्व | भीयास्म। |
| ९. लोटि– | | | |
| प्र.- | बिभेतु-बिभितात्-बिभीतात् | बिभिताम्-बिभीताम् | बिभ्यतु |
| म.- | बिभिहि-बिभीहि-बिभितात्-बिभीतात् | बिभितम्-बिभीतम् | बिभित-बिभीत |
| उ.- | बिभयानि | बिभयाव | बिभयाम। |
| १०. लृङि– | | | |
| प्र.- | अभेष्यत् | अभेष्यताम् | अभेष्यन् |
| म.- | अभेष्यः | अभेष्यतम् | अभेष्यत |
| उ.- | अभेष्यम् | अभेष्याव | अभेष्याम। |

२. बिभयाञ्चकार इत्यादीनि, बिभयाम्बभूव इत्यादीनि, बिभयामास इत्यादीनि च रूपाणि ज्ञेयानि।

